काशीस्थराजकीयसंस्कृतप्रथमपरीक्षानि...

श्रीमहाभारत-उद्योगपर्वणिस्थम्

# * विदुलोपाख्यानम् *

१३३ अध्यायादारभ्य १३६ अध्यायपर्यन्तम्

अध्यायचतुष्टयात्मकम् ।

[ सरलव्याख्या-भावार्थहिन्दी-प्रभाटीकासमेतम् ]

सम्पादकः—

आचार्यश्रीराजनारायणशास्त्री 'शुक्ल'

प्रकाशकः—

**मास्टर खेलाड़ीलाल ऐण्ड सन्स,**

संस्कृत-बुकडिपो,

कचौड़ीगली, बनारस सिटी ।

मूल्यम् १।)

'मास्टर'मणिमालायाः १९४ संख्यको मणिः ( साहित्यविभागे ८ )

॥ श्रीः ॥

काशीस्थराजकीयसंस्कृतप्रथमपरीक्षानिर्द्धारितम्।

श्रीमहाभारत-भगवद्यानपर्वणिस्थम्

# विदुलोपाख्यानम्

१३३ अध्यायादारभ्य १३६ अध्यायपर्यन्तम्,
अध्यायचतुष्टयात्मकम्।

तदिदम्—

प्रायःशतग्रन्थसम्पादकेन "शास्त्रार्थमहाविद्यालय, मीरघाट, काशी" इत्यस्याऽध्यक्षेण विश्वविश्रुतपण्डितराजश्रीवेणीमाधवशास्त्रिणामात्मजेन ख्यातनाम्ना आचार्य-श्रीराजनारायणशास्त्रिशुक्लमहोदयेन न्यायाद्यनेकशास्त्राचार्येण संस्कृत-हिन्दीद्वयात्मकप्रभाटीकया संयोज्य सम्पादितम्।

तच्च—

काशीस्थ—'संस्कृत-बुकडिपो—इत्यस्याध्यक्षवरेण्यैः
मास्टर खेलाड़ीलाल ऐण्ड सन्स महोदयैः
स्वीये'मास्टर-प्रिण्टिङ्ग-वर्क्स'ऽभिधयन्त्रालये
मुद्रापयित्वा प्रकाशितम्।

प्रथमं संस्करणम्] सन् १९४७ ई० [मूल्यम् १)



# वक्तव्यम्

मान्याः पाठकाः प्रेयांसोऽध्येतारश्च !

अद्यत्वे लौकिकाः अमरभारतीसमुपासकान् युष्मान् अकर्मठान् आलस्यजुषः देशसेवाविमुखा नवपद्धत्यनभिज्ञा इत्यादिशब्दैः उद्घोषयन्ति। केषुचिदंशेषु सत्योऽप्ययं प्रवादः। अहो ! नायं रामराज्यादर्शकालः इदानीं श्रीमतां विद्वद्गणगरीयसामपि नोचितः समादरः। अतः भवद्भिरपि वीरैर्धीरैः कर्मठः सहैव च प्राचीनार्यमर्यादया सनातनधर्मावलम्बिन्या ब्राह्मकृत्यकारिभिश्च भवितव्यम।

नाद्य शान्तिकालः, नवा सहिष्णुतानीतिः किन्तु प्रत्युत्तरदानकालः। यथोक्तम—'उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु' इत्यत्र। अत एव युष्मासु सुचिरनिहितताद्दशप्रवादस्यापनुत्तये राजकीयसंस्कृतमहाविद्यालयपरीक्षासञ्चालनाधिकारिभिः महाशयैः वीररसपूर्णाम् उपदेशमयम् विदुलोपाख्यानम् इदम परीक्षायां निर्द्धार्य बहूपकृतम। इदन्तु तावदवश्यं शाशक्यते वक्तुं यद् विदुलोपाख्यानमिदम् पाठम् पाठम् भविष्यति विशेषतः शक्तिसञ्चारः संस्कृतसाहित्यान्ववायेष्वपि। वस्तुतः आवश्यकतास्ति प्रचाराचारयोः ईद्दशाख्यानानाम्। मूलमात्रप्रकाशनम् प्रायोस्यावलोक्य छात्राणां हिताय संस्कृतहिन्दीद्वयात्मकप्रभाटीकया स्वनिर्मितया सम्पाद्य समुपस्थापयते संस्करणमिदम्। कालाभावात् कार्यबाहुल्याच्च मया सम्पादितेऽस्मिन सम्भवन्तो दोषाः गुणग्राहकैरवश्यं क्षन्तव्याः स्युरिति न तदर्थं किमपि अनुनयति।

व्यासपूर्णिमा
वै० स० २००४

भवदीय एव—
श्रीराजनारायणशुक्लः,
शास्त्रार्थमहाविद्यालय, मीरघाट, काशी।

# अथ विदुलोपाख्यानम् ।

[ संस्कृत-हिन्दी-द्वयात्मकप्रभाटीकाविराजितम् ]

## प्रथमोऽध्यायः ।

### कुन्त्युवाच ।

अत्राऽप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुलायाश्च सम्वादं पुत्रस्य च परंतप ! ।। १ ।।

**पदच्छेदः**—अत्र, अपि, उदाहरन्ति, इमम्, इतिहासम्, पुरातनम्, विदुलायाः, च, सम्वादम्, पुत्रस्य, च, परन्तप ।

**अन्वयः**—हे परन्तप ! अत्र, अपि, विदुलायाः, पुत्रस्य, च, सम्वादम्, इमम्, पुरातनम्, इतिहासम्, उदाहरन्ति ।

**व्याख्या**—हे परन्तप ( हे शत्रुपीडक भगवन् कृष्ण ! ) अत्र (अस्मिन् विषये) अपि ( एव ) विदुलायाः ( तन्नामकवीरायाः ) पुत्रस्य ( तत्पुत्रस्य ) च, सम्वादम् ( वार्तालापम् ) इमम् ( वक्ष्यमाणम् ) पुरातनम् ( प्राचीनम् ) इतिहासम् ( कथानकम् ) उदाहरन्ति ( वदन्ति ) प्राचीनाः इति शेषः ।

**व्युत्पत्तिः**—परन्तापयति इति परन्तपः ( द्विषत्परयोस्तापेः इति खचि सिद्धिः ) इति ह ( उपदेशपरम्परा ) आस्तेऽस्मिन् स इतिहासः ।

**भावार्थः**—कुन्ती ने भगवान् कृष्ण से कहा कि मेरे पुत्र युधिष्ठिर आदि को युद्धके लिए आप प्रेरित करें । क्षत्रिय का धर्म है युद्ध करके राज्य लेना । युद्ध से पीछे रहना कातरता है । इसी विषय में मैं आप को एक वीर क्षत्रिया विदुला की कथा सुनाती हूँ । जिसने सिन्धुराज से हार कर शान्त पड़े हुए अपने पुत्र को लड़ने के लिए प्रोत्साहित किया था ।।१।।

ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हसि ।
यशस्विनी मन्युमती कुले जाता विभावरी ।। २ ।।

**पदच्छेदः**—ततः, श्रेयः, च, भूयः, च, यथावत्, वक्तुम्, अर्हसि, यशस्विनी, मन्युमती, कुले, जाता, विभावरी ।

अन्वयः—पदच्छेदवत् एव ।

व्याख्या—ततः ( तम् इतिहासम् श्रुत्वा ) श्रेयः ( प्रशस्ततरम् ) च भूयः ( अधिकतरम् ) च यथावत ( यथारूपम् ) वक्तुम् ( कथयितुम् ) अर्हसि ( योग्योऽसि ) यशस्विनी ( कीर्तिमती ) मन्युमती ( क्रोधना ) कुले ( सत्क्षत्रिय-कुले ) जाता ( उत्पन्ना ) विभावरी ( कुटिलस्वभावा ) विदुला इति अग्रिमेण सम्बन्धः ।

व्युत्पत्तिः—यशः अस्ति अस्याः इति यशस्वती । मन्युः अस्ति अस्या इति मन्युमती । विभावरी रजन्यां च वक्रयोषिति इति विश्वः ।

भावार्थः—हे भगवन् कृष्ण ! विदुला तथा उसके पुत्र के सम्वादरूप इस इतिहास को सुनकर आप अच्छी तरह युधिष्ठिर आदि पाण्डवों को युद्ध के लिए प्रोद्यत कर सकते हैं । वह कीर्त्ति से युक्त, क्रोध करनेवाली, उत्तम क्षत्रियकुल में उत्पन्न, टेढ़े स्वभाववाली ( थी ) ॥२॥

क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३ ॥

पदच्छेदः—क्षत्रधर्मरता, दान्ता, विदुला, दीर्घदर्शिनी, विश्रुता, राजसंसत्सु, श्रुतवाक्या, बहुश्रुता ।

अन्वयः—क्षत्रधर्मरता, दान्ता, दीर्घदर्शिनी, राजसंसत्सु, श्रुतवाक्या, विश्रुता, बहुश्रुता, विदुला ।

व्याख्या—क्षत्रधर्मरता ( क्षत्रियधर्मपालनपरा ) दान्ता ( जितेन्द्रिया ) दीर्घदर्शिनी ( बहुज्ञा ) राजसंसत्सु ( राजसभासु ) विश्रुता ( सुप्रसिद्धा ) श्रुतवाक्या ( पठिता ) बहुश्रुता ( अनेकनीतिशास्त्रज्ञानवती ) विदुला ( तन्नाम्नी क्षत्रिया ) आसीत् इति ।

व्युत्पत्तिः—क्षत्रस्यधर्मः क्षत्रधर्मः तस्मिन् रता क्षत्रधर्मरतेति तत्पुरुषः । दीर्घम् पश्यति सा । राज्ञः संसदः तासु, तत्पुरुषः । श्रुतानि वाक्यानि यया सा श्रुत-वाक्या, अत्र बहुव्रीहिः । बहु श्रुतं यया यस्या वेति बहुव्रीहिः । नपुंसके भावे क्तवि-धानेन पूर्वनिपातो नेति सम्प्रदायः ।

भावार्थः—क्षत्रियों के धर्म में तत्परा, इन्द्रियों को वश में रखनेवाली, दूर तक समझनेवाली, राजसभाओं में नीति वाक्यों द्वारा प्रसिद्ध तथा अनेक नीतिशास्त्रों की जाननेवाली विदुला नामकी क्षत्रिया थी ॥३॥

विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ४ ॥

पदच्छेदः—विदुला, नाम, राजन्या, जगर्हे, पुत्रम्, औरसम्, निर्जितम्, सिन्धुराजेन, शयानम्, दीनचेतसम् ।

अन्वयः—राजन्या, विदुला नाम, सिन्धुराजेन, निर्जितम्, दीनचेतसम्, शयानम्, औरसम्, पुत्रम्, जगर्हे ।

व्याख्या—राजन्या ( मूर्द्धाभिषिक्ता ) विदुला नाम, सिन्धुराजेन ( सिन्धुदेशाधिपेन ( निर्जितम् ( पराजितम् ) दीनचेतसम् ( कातरमानसम् ) शयानम् ( शयनं कुर्वन्तम् ) औरसम् ( निजम् ) पुत्रम् ( सुतम् ) जगर्हे ( निन्दितवती ) ।

व्युत्पत्तिः—सिन्धूनां देशविशेषाणां राजा सिन्धुराजः (तत्पुरुषः) तेन । दीनं चेतो यस्य स दीनचेताः तम् ( बहुव्रीहिः ) मूर्द्धाभिषिक्तो राजन्यः इत्यमरः ।

भावार्थः—वीरक्षत्रिया विदुला ने सिन्धुराज से पराजित, हताश पड़े हुये अपने पुत्र को फटकारा ॥४॥

## विदुलोवाच ।

अनन्दन ! मया जात ! द्विषतां हर्षवर्धन ! ।
न मया त्वं न पित्रा च जातः काभ्यागतो ह्यसि ॥ ५ ॥

पदच्छेदः—अनन्दन, मया, जात, द्विषताम्, हर्षवर्द्धन, न, मया, त्वम्, न, पित्रा, च, जातः, क ? अभ्यागतः, असि ।

अन्वयः—हे मया जात ! अनन्दन ! द्विषताम्, हर्षवर्द्धन ! त्वम्, मया, न, पित्रा, च, न, जातः, क ? अभ्यागतः, असि ।

व्याख्या—हे मया जात ! ( विदुलयोत्पन्न ) अनन्दन ! ( कुपुत्र ) द्विषताम् ( शत्रूणाम् ) हर्षवर्द्धन ! ( प्रसादक ) त्वम् ( सञ्जयः ) मया ( विदुलया ) न, पित्रा ( जनकेन ) च, न, जातः ( उत्पन्नः ) क ( कुतः ) अभ्यागतः ( पतितः ) असि ?

व्युत्पत्तिः—नन्दयतीति नन्दनः । न नन्दनः इति नञ्समासः, कुत्सार्थेऽत्र नञ् । हर्षम् वर्द्धयते इति हर्षवर्द्धनः तत्सम्बुद्धौ ।

भावार्थः—विदुला ने कहा कि हे शत्रुओं के आनन्द को बढ़ानेवाले तथा मुझे दुःख देनेवाले पुत्र ! मुझे मालूम होता है कि तू नतो मुझसे, न अपने पिता से ही उत्पन्न है, कहाँ से आया समझ में नहीं आता । अर्थात् ऐसा कातर तथा निस्साहस पुत्र क्षत्रिय सन्तान नहीं हो सकता ॥५॥

निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६ ॥

पदच्छेदः—निर्मन्युः, च, अपि, असंख्येयः, पुरुषः, क्लीबसाधनः, यावज्जीवम्, निराशः, असि, कल्याणाय, धुरम्, वह ।

अन्वयः—त्वम्, निर्मन्युः, च, अपि, असंख्येयः, क्लीबसाधनः, यावज्जीवम्, निराशः, पुरुषः, असि, कल्याणाय, धुरम्, वह।

व्याख्या—त्वम् ( सञ्जयः ) निर्मन्युः ( क्रोधहीनः ) च, अपि, असंख्येयः ( वीरेष्वगणनीयः ) क्लीबसाधनः ( अकिञ्चित्करहस्तपादादिः ) यावज्जीवम् ( जीवन-पर्यन्तम् ) निराशः ( आशारहितः ) पुरुषः ( मनुष्यः ) असि ( वर्त्तसे ) कल्याणाय ( शिवाय ) धुरम् ( भारम् ) वह ( धारय )

व्युत्पत्तिः—निर्गतः मन्युः यस्मात् स निर्मन्युः। न संख्येयः असंख्येयः, ( नञ्तत्पुरुषः ) क्लीबानि साधनानि यस्य सः ( बहुव्रीहिः ) जीवम् यावदिति यावज्जीवम् ( अव्ययीभावः ) निर्गता आशा यस्मात् स निराशः।

भावार्थः—हे कुपुत्र ! क्रोधहीन होने के कारण तू क्षत्रियों में गिनने योग्य नहीं, तुम्हारी भुजा आदि वीरों के साधन नपुंसकों-के-से हैं, भला शरीर में प्राण रहते क्यों आशा छोड़ बैठा ? यह उचित नहीं। तुम्हें चाहिए कि अपने कल्याण के पथ पर चलो ॥६॥

माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः।
मनः कृत्वा सुकल्याणं माभैस्त्वं प्रतिसंहर ॥ ७ ॥

पदच्छेदः—मा, आत्मानम्, अवमन्यस्व, मा, एनम्, अल्पेन, बीभरः, मनः, कृत्वा, सुकल्याणम्, माभैः, त्वम्, प्रतिसंहर।

अन्वयः—त्वम्, आत्मानम्, मा अवमन्यस्व, एनम्, अल्पेन, मा बीभरः, मनः, सुकल्याणम्, कृत्वा, माभैः, प्रतिसंहर।

व्याख्याः—त्वम् ( सञ्जय ) आत्मानम् ( स्वम् ) मा अवमन्यस्व ( न अपमानय ) एनम् ( आत्मानम् ) अल्पेन ( स्वल्पेन कल्याणवस्तुना ) माबीभरः ( मापालय ) मनः ( चेतः ) सुकल्याणम् ( उत्तमशिवम् ) कृत्वा ( सन्धाय ) माभैः ( भयं न कुरु ) प्रतिसंहर ( भयम् दूरय )।

व्युत्पत्तिः—शोभनानि कल्याणानि यस्मिन् तत् ( बहुव्रीहिः ) माभैः अत्र न माङ्योगे इत्यडाटौ न।

भावार्थः—अरे कुपुत्र ! तू अपनी आत्मा का अपमान न कर, तुच्छ तथा छोटी वस्तुओं से अपना निर्वाह न कर, अपने मनमें अच्छे कल्याण की इच्छा कर, भय का त्याग कर ॥७॥

उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः।
अमित्रान्नन्दयन् सर्वान्निर्मानो बन्धुशोकदः ॥ ८ ॥

**पदच्छेदः**—उत्तिष्ठ, हे कापुरुष ! माशेष्व, एवम्, पराजितः, अमित्रान्, नन्दयन्, सर्वान्, निर्मानः, बन्धुशोकदः ।

**अन्वयः**—हे कापुरुष ! उत्तिष्ठ, सर्वान्, अमित्रान्, नन्दयन्, निर्मानः, बन्धुशोकदः, पराजितः, एवम्, माशेष्व ।

**व्याख्या**—हे कापुरुष ( हे कुजन ! ) उत्तिष्ठ ( उत्थितो भव ) सर्वान् ( निखिलान् ) अमित्रान् ( शत्रून् ) नन्दयन् ( प्रसादयन् ) निर्मानः ( अहङ्कार-शून्यः ) बन्धुशोकदः ( बान्धवचिन्ताकारकः ) पराजितः ( विजितः ) एवम् ( अमुना प्रकारेण ) माशेष्व ( न शयनं कुरु ) निरुद्योगो न भवेत्यर्थः ।

**व्युत्पत्तिः**—कुत्सितः पुरुषः कापुरुषः ( कर्मधारयः ) न मित्राः अमित्रा इति ( नञ्समासः ) मित्रशब्दः अर्द्धर्चादिषु पुमानपि । निर्गतम् मानं यस्मात् सः । शोकम् ददातीति शोकदः, बन्धूनां शोकदः बन्धुशोकदः ( षष्ठीतत्पुरुषः )

**भावार्थः**—अरे कायर ! तू उठ खड़ा हो, हार कर इस तरह मत सो, इस तरह सोकर शत्रुओं को क्यों प्रसन्न कर रहा है । कुल की प्रतिष्ठा नष्ट कर बन्धुओं को क्यों चिन्तित बना रहा है ?

सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ९ ॥

**पदच्छेदः**—सुपूरा, वै, कुनदिका, सुपूरः, मूषिकाञ्जलिः, सुसन्तोषः कापुरुषः, स्वल्पकेन, एव, तुष्यति ।

**अन्वयः**—कुनदिका, वै, सुपूरा, मूषिकाञ्जलिः, सुपूरः, कापुरुषः, सुसन्तोषः, स्वल्पकेन, एव, तुष्यति ।

**व्याख्या**—कुनदिका ( क्षुद्रा नदी ) वै ( निश्चयेन ) सुपूरा ( सुखेन पूरयितुं शक्या ) मूषिकाञ्जलिः ( मूषिकाकरपुटः ) सुपूरः ( स्वल्पेनापि पूरणीयः ) कापुरुषः ( कातरः जनः ) सुसन्तोषः ( सन्तोषभाक् ) स्वल्पकेन ( अल्पेन ) एव तुष्यति ( सन्तुष्टो भवति ) ।

**व्युत्पत्तिः**—सुष्ठु पूरयितुं शक्या सुपूरा । मूषिकस्य अञ्जलिः ( षष्ठी तत्पुरुषः ) सुष्ठु सन्तोषो यस्य सः ( इति बहुव्रीहिः )

**भावार्थः**—जैसे छोटी नदी तथा चूहे की अञ्जलि थोड़े से ही भर जाती है वैसे ही थोड़ीसी वस्तु से पूर्ण सन्तुष्ट रहने वाले की भी दशा होती है । उसका अभ्युदय विधाता भी नहीं करना चाहते ॥९॥

अप्यहेरारुजन् दंष्ट्रामाश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥१०॥

पदच्छेदः—अपि, अहेः, आरुजन्, दंष्ट्राम्, आशु, एव, निधनम्, व्रज, अपि, वा, संशयम्, प्राप्य, जीविते, अपि, पराक्रमेः ।

अन्वयः—अहेः, दंष्ट्राम्, आरुजन्, अपि, आशु, एव, निधनम्, व्रज, अपि, वा, जीविते, अपि, संशयम्, प्राप्य, पराक्रमेः ।

व्याख्या—अहेः ( सर्पस्य ) दंष्ट्राम् ( दन्तावलिम् ) आरुजन् ( त्रोटयितुमिच्छन् ) अपि आशु ( शीघ्रम् ) एव निधनम् ( मरणम् ) व्रज ( गच्छ ) अपि वा ( अथवा ) जीविते अपि ( जीवनेऽपि ) संशयम् ( सन्देहम् ) प्राप्य ( गत्वा ) पराक्रमेः ( पराक्रमं कुर्याः ) ।

व्युत्पत्तिः—आङ्पूर्वकात् रुजधातोः शतृप्रत्यये आरुजन् । प्र-आप्-ल्यप् प्राप्य । परा-क्रम-लिङ् पराक्रमेः ।

भावार्थः—जैसे साँप का दाँत तोड़ने की इच्छा से प्रवृत्त मनुष्य की मृत्यु हो जाती है वैसे ही युद्ध करते २ तुम्हारी भी मृत्यु हो जाय तो अच्छा ही समझो परन्तु कुत्ते की मौत तुम्हारा मरना अच्छा नहीं । प्राण का भी संशय हो तो भी तुम युद्ध के लिए उद्यत रहो ॥१०॥

अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विवदन् वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥११॥

पदच्छेदः—अपि, अरेः, श्येनवत्, छिद्रम्, पश्येः, त्वम्, विपरिक्रमन्, विवदन्, वा, अथवा, तूष्णीम्, व्योम्नि, इव, अपरिशङ्कितः ।

अन्वयः—अपि, त्वम्, विपरिक्रमन्, विवदन्, वा, व्योम्नि, श्येनवत्, अपरिशङ्कितः, इव ( विचरेः ) अथवा, तूष्णीम्, अरेः, छिद्रम्, पश्येः ।

व्याख्या—अपि त्वम् ( सञ्जयः ) विपरिक्रमन् ( पराक्रमं कुर्वन् ) विवदन् ( विवादं कुर्वन् ) वा व्योम्नि ( आकाशे ) श्येनवत् ( तन्नामकपक्षिविशेषवत् ) अपरिशङ्कितः ( निःशङ्कः ) विचरेः । अथवा तूष्णीम् ( मौनः ) अरेः ( शत्रोः ) छिद्रम् ( आक्रमणीयस्थानम् ) पश्येः ( अवलोकयेः ) प्रतीक्षेथाः इत्यर्थः ।

व्युत्पत्तिः—श्येन इवेति श्येनवत् । न परिशङ्कितः अपरिशङ्कितः ( नञ्-तत्पुरुषः ) ।

भावार्थः—हे पुत्र ! या तो आकाश में बाज पक्षी की तरह निश्शङ्क तू युद्ध करता हुआ विचरण करे, अथवा चुप चाप एक तरफ बैठ कर शत्रु के छिद्रों का अन्वेषण करे ॥११॥

त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष ! मा स्वाप्सीः शत्रुनिर्जितः ॥१२॥

**पदच्छेदः**—त्वम्, एवम्, प्रेतवत्, शेषे, कस्मात्, वज्रहतः, यथा, उत्तिष्ठ, हे कापुरुष ! मा स्वाप्सीः, शत्रुनिर्जितः ।

**अन्वयः**—त्वम्, कस्मात्, प्रेतवत्, शेषे, यथा, वज्रहतः (तथा) हे कापुरुष ! उत्तिष्ठ, शत्रुनिर्जितः, मा स्वाप्सीः ।

**व्याख्या**—त्वम् ( सञ्जय ) कस्मात् ( कुतः कारणात् ) प्रेतवत् ( मृतवत् ) शेषे ( शयनं करोषि ) यथा वज्रहतः ( अशनिप्रहृतः ) हे कापुरुष ! ( हे कुजन ! ) उत्तिष्ठ ( उत्थानं कुरु ) शत्रुनिर्जितः ( अरिजितः ) मा स्वाप्सीः ( माशेष्व ) ।

**व्युत्पत्तिः**—वज्रेण हतः वज्रहतः ( तृतीयातत्पुरुषः ) शत्रुभिः निर्जितः शत्रुनिर्जितः अत्रापि तृ० तत्पु० । मास्वाप्सीः, माङ्योगे ञिष्वप् शये धातोः लुङि मध्यमपुरुषैकवचनम्, अडभावः ।

**भावार्थः**—जैसे वज्र से मारा गया कोई मुर्दा सो रहा हो वैसे तू क्यों पड़ा है ? ऐ कायर ! उठ, शत्रुसे हारकर तेरा इस तरह पड़ा रहना अच्छा नहीं ॥१२॥

माऽस्तंगमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः ॥१३॥

**पदच्छेदः**—मा, अस्तम्, गमः, त्वम्, कृपणः, विश्रूयस्व, स्वकर्मणा, मा, मध्ये, मा, जघन्ये, त्वम्, मा, अधः, भूः, तिष्ठ, गर्जितः ।

**अन्वयः**—त्वम्, कृपणः, मा, अस्तम्, गमः, स्वकर्मणा, विश्रूयस्व, त्वम्, मध्ये, मा, जघन्ये, मा, अधः मा, भूः, गर्जितः, तिष्ठ ।

**व्याख्या**—त्वम् ( सञ्जयः ) कृपणः ( कातरः ) मा अस्तम् ( न विनाशम् ) गमः ( गच्छ ) स्वकर्मणा ( स्वकार्य्यप्रदर्शनेन ) विश्रूयस्व ( विख्यातो भव ) मध्ये ( भेदोपाये मा ) जघन्ये ( सामोपाये ) मा ( न ) अधः ( दानोपाये ) माभूः ( ना तिष्ठ ) किन्तु सर्वोच्चेन दण्डोपायेन गर्वितः ( दण्डयिता ) तिष्ठ ( भव ) दण्डदानाय यतस्वेति यावत् ।

**व्युत्पत्तिः**—स्वस्य कर्म स्वकर्म तेन ( षष्ठी तत्पुरुषः ) ।

**भावार्थः**—हे सञ्जय ! तू कृपण बन कर अस्त मत हो, सामदान भेद इन तीनों उपायों को भी छोड़ दण्डका ही आश्रय लेकर शत्रुओं को दण्डित करने के लिए तैयार हो जा । जिससे तुम्हारा यश विदित हो जाय ॥१३॥

अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥१४॥

**पदच्छेदः**—अलातम्, तिन्दुकस्य, इव, मुहूर्त्तम्, अपि, हि, ज्वल, मा, तुषाग्निः, इव, अनर्चिः, धूमायस्व, जिजीविषुः ।

**अन्वयः**—हि, तिन्दुकस्य, अलातम्, इव, मुहूर्त्तम्, अपि, ज्वल, अनर्चिः, तुषाग्निः, इव, जिजीविषुः, मा, धूमायस्व।

**व्याख्या**—हि (यतः) तिन्दुकस्य (वृक्षविशेषस्य) अलातम् ( स्फुलिङ्गम् ) इव (यथा) मुहूर्त्तम् ( क्षणम् ) अपि, ज्वल ( दीप्यस्व ) अनर्चिः ( ज्योतिर्हीनः ) तुषाग्निः ( तुषस्थवह्निः ) इव, जिजीविषुः (जीवितुमिच्छुः) मा धूमायस्व ( धूमंनोत्पादय )।

**व्युत्पत्तिः**—तुषे यः अग्निः तुषाग्निः। निष्कासिततण्डुलस्य धान्यस्य यः शेषः 'भूसी' इति लोकप्रसिद्धः स एव तुष इति ज्ञेयः। नास्ति अर्चिः यस्मिन् सः अनर्चिः। जीवितुमिच्छुः जिजीविषुः। जीवधातोः सन्नन्तात् "सनाशंसभिक्ष उः" इति पाणिनीयेन सिद्धिः।

**भावार्थः**—अरे कुपुत्र! तिन्दुक लकड़ी के अंगारों की तरह कम से कम कुछ देर के लिए तो तू प्रज्वलित हो उठ। भूसी में रहनेवाली केवल धुआँ फेकने-वाली आगकी तरह देर तक सुलगने से ही क्या लाभ, वह जीना तो व्यर्थ ही है।

मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम्।
मा ह स्म कस्यचिद्गेहे जनि राज्ञः खरो मृदुः॥१५॥

**पदच्छेदः**—मुहूर्त्तम्, ज्वलितम्, श्रेयः, न च, धूमायितम्, चिरम्, मा ह स्म, कस्यचित्, गेहे, जनि, राज्ञः, खरः, मृदुः।

**अन्वयः**—मुहूर्त्तम्, ज्वलितम, श्रेयः, चिरम्, धूमायितम्, न, कस्यचित्, राज्ञः, गेहे, खरः, मृदुः, माजनि, ह स्म।

**व्याख्या**—मुहूर्त्तम् ( किञ्चित्कालम् ) ज्वलितम् ( प्रज्वलनम् ) श्रेयः ( उत्तमम् ) चिरम् ( अधिककालम् ) धूमायितम् ( धूमवत्त्वम् ) न ( नोचितम् ) कस्यचित् राज्ञः ( क्षत्रियस्य ) गेहे ( गृहे ) खरः ( कठिनस्वभावः ) मृदुः ( अतिकोमलस्वभावः ) वा माजनि ( न उत्पद्यताम् ) ह स्म।

**व्युत्पत्तिः**—धूम इवाचरति धूमायते-धूमाय धातोः क्तः। मुहूर्त्तम् घटिका-द्वयम् इति ज्यौतिषम्।

**भावार्थः**—कुछदेर के लिए भी चमक उठना अच्छा है परन्तु अधिक समय तक धुआँ फेकते रहना उत्तम नहीं। किसी भी राजा के घर अत्यन्त कठिन वा कोमल स्वभाव लेकर उत्पन्न न होना ही अच्छा है॥१५॥

कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम्।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते॥१६॥

**पदच्छेदः**—कृत्वा, मानुष्यकम्, कर्म, सृत्वा, आजिम्, यावत्, उत्तमम्, धर्मस्य, आनृण्यम्, आप्नोति, न च, आत्मानम्, विगर्हते।

अन्वयः—मानुष्यकम्, कर्म, कृत्वा, यावत्, उत्तमम्, आजिम्, सृत्वा, धर्मस्य, आनृण्यम्, आप्नोति, आत्मानम्, च, न, विगर्हते ।

व्याख्या—मानुष्यकम् ( मनुष्योचितम् ) कर्म ( कर्त्तव्यम् ) कृत्वा (विधाय) यावत् उत्तमम् ( उचितम् ) आजिम् ( युद्धम् ) सृत्वा ( सम्पाद्य ) धर्मस्य ( क्षात्रधर्मस्य ) आनृण्यम् ( ऋणरहितत्वम् ) आप्नोति ( प्राप्नुते ) आत्मानम् ( स्वम् ) च न विगर्हते ( कुत्सयति ) ।

व्युत्पत्तिः—मनुष्यस्योचितम् मानुष्यकम् ।

भावार्थः—युद्धकुशल क्षत्रिय उत्तम युद्ध करने के लिए मनुष्यसाध्य कर्म करके धर्म के ऋण से छूटता है, साथही अपनी निन्दा नहीं कराता है ॥१६॥

अलब्ध्वा यदि वा लब्ध्वा नाऽनुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥१७॥

पदच्छेदः—अलब्ध्वा, यदि, वा, लब्ध्वा, न, अनुशोचति, पण्डितः, आनन्तर्यम्, च, आरभते, न, प्राणानाम्, धनायते ।

अन्वयः—पण्डितः, लब्ध्वा, यदि, वा, अलब्ध्वा, न अनुशोचति, प्राणानाम्, आनन्तर्यम्, च, आरभते, न, धनायते ।

व्याख्या—पण्डितः ( कुशलः पुरुष ) लब्ध्वा ( प्राप्य ) यदि वा अलब्ध्वा ( अप्राप्य ) न अनुशोचति ( पश्चात्तपति ) प्राणानाम्, ( बलसाध्यकार्याणाम् ) आनन्तर्यम् ( अविच्छेदेन कार्यधाराम् ) च आरभते ( कुरुते ) न धनायते ( नात्मनो धनमिच्छति ) तृष्णां त्यजतीत्यर्थः ।

व्युत्पत्तिः—प्राणाः बलम् तत्साध्यानि कार्याणि प्राणानि तेषाम् । आत्मनो धनमिच्छति धनायते नामधातुः ।

भावार्थः—बुद्धिमान् पुरुष निरन्तर कार्य करता रहता है चाहे फल मिले या न, वह उसकी प्रतीक्षा में नहीं रहता । पराक्रम के समय अपने प्राणों या धन की भी परवाह नहीं करता ॥१७॥

उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ? ॥१८॥

पदच्छेदः—उद्भावयस्व, वीर्यम्, वा, ताम्, वा, गच्छ, ध्रुवाम्, गतिम्, धर्मम्, पुत्र !, अग्रतः, कृत्वा, किंनिमित्तम्, हि, जीवसि ।

अन्वयः—हे पुत्र ! वीर्यम्, वा, उद्भावयस्व धर्मम्, अग्रतः, कृत्वा, ताम्, वा, ध्रुवाम्, गतिम्, गच्छ, हि, किंनिमित्तम्, जीवसि ।

व्याख्या—हे पुत्र ! ( हे सुत ) वीर्यम् ( पराक्रमम् ) वा उद्भावयस्व

( प्रकटय ) धर्मम् ( क्षत्रियधर्मम् ) अग्रतः कृत्वा ( विधाय ) ताम् वा ( प्रसिद्धाम् ) ध्रुवाम् ( निश्चिताम् ) गतिम् ( मृत्युरूपाम् ) गच्छ ( व्रज ) हि किंनिमित्तम् ( किमर्थम् ) जीवसि ( प्राणान् धारयसे ) व्यर्थमेवेत्यर्थः ।

व्युत्पत्तिः—किम् निमित्तम् यस्मिन् तत् । अग्रे इति अग्रतः सर्वविभक्तिभ्यस्तसिल् इति सप्तम्यास्तसिल् ।

भावार्थः—हे पुत्र ! तुम पराक्रम कर युद्ध में यश प्राप्तकर, नहीं तो मर ही जा, इस तरह अपमानित हो कर क्यों जी रहे हो समझ में नहीं आता ॥१८॥

शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत् कथञ्चन ॥१९॥

पदच्छेदः—शत्रुः, निमज्जता, ग्राह्यः, जङ्घायाम्, प्रपतिष्यता, विपरिच्छिन्नमूलः, अपि, न, विषीदेत्, कथञ्चन ।

अन्वयः—निमज्जता, प्रपतिष्यता ( वा ) शत्रुः, जङ्घायाम्, ग्राह्यः, विपरिच्छिन्नमूलः, अपि, कथञ्चन, न, विषीदेत् ।

व्याख्या—निमज्जता ( जलादिषु मग्नत्वम् आसादयता मनस्विना ) प्रपतिष्यता ( प्रबलशत्रुणा पतनं गमिष्यता वा ) शत्रुः ( वैरी ) जङ्घायाम् (ऊरुप्रदेशे बद्ध्वा) ग्राह्यः ( सह नेयः ) पातनीयः निमज्जनीयश्च । तेनैव सह निमज्जेत् पतेद् वा । विपरिच्छिन्नमूलः ( भ्रष्टमूलः ) अपि कथञ्चन ( कथमपि ) न विषीदेत् ( न निरुद्यमो भवेत् ) सोद्योग एव सदा तिष्ठेदित्यर्थः ।

व्युत्पत्तिः—निमज्जतीति निमज्जन् तेन । प्रप्रतिष्यति इति प्रपतिष्यन् तेन । विपरिच्छिन्नम् मूलं यस्य सः बहुव्रीहिः ।

भावार्थः—युद्धकाल में शत्रुद्वारा निर्दयता पूर्वक जल में डुबाये जाते तथा गिराये जाते समय वीरका कर्त्तव्य है कि अपने शत्रु की टांग पकड़ले जिससे वह भी साथही डूबे या गिरे । ऐसा करने में यदि प्राण का भी संशय हो तो उद्योग न छोड़े ॥१९॥

इष्टापूर्तं हि ते क्लीब ! कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ? ॥२०॥

पदच्छेदः—इष्टापूर्त्तम्, हि, ते, क्लीब ! कीर्त्तिः, च, सकला, हता, विच्छिन्नम्, भोगमूलम्, ते, किंनिमित्तम्, हि, जीवसि ।

अन्वयः—हे क्लीब ! हि, ते, इष्टापूर्त्तम्, सकला, कीर्त्तिः, च, हता, ते, भोगमूलम्, विच्छिन्नम्, किंनिमित्तम्, जीवसि ।

व्याख्या—हे क्लीब ! ( हे नपुंसक ! ) हि ( यतः ) ते ( तव ) इष्टापूर्त्तम्

( यागादिफलम् ) सकला ( सम्पूर्णा ) कीर्त्तिः ( यशः ) च हता ( नष्टा ) ते ( तव ) भोगमूलम् ( भोगसाधनम्, राज्यं धनं वा ) विच्छिन्नम् ( नष्टम् ) हि ( पुनरपि ) किंनिमित्तम् ( किमर्थम् ) जीवसि ( प्राणान् धारयसे ) आश्चर्यमिति भावः ।

व्युत्पत्तिः—भोगस्य मूलम् षष्ठीतत्पुरुषः । इष्टापूर्त्तम्-इष्टम् यज्ञयागादि, आपूर्त्तम् वापीकूपादिनिर्माणम् उभयोः समाहारः ।

भावार्थः—अरे नपुंसक अपने यज्ञयागादि तथा बावड़ी आदि खुदवाने के फल, सम्पूर्ण कीर्त्ति तथा सुख के साधन धन, राज्य को भी तूने नष्ट कर दिया फिर क्यों जी रहा है? ॥२०॥

उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ।
कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः ॥२१॥

पदच्छेदः—उद्यम्य, धुरम्, उत्कर्षेत्, आजानेयकृतम्, स्मरन्, कुरु, सत्त्वम्, च, मानम्, च, विद्धि, पौरुषम्, आत्मनः ।

अन्वयः—उद्यम्य, धुरम्, उत्कर्षेत्, आजानेयकृतम्, स्मरन्, सत्त्वम्, मानम्, च, कुरु, आत्मनः, पौरुषम्, विद्धि ।

व्याख्या—उद्यम्य ( उद्योगं कृत्वा ) धुरम् ( भारम् ) उत्कर्षेत् ( उद्यच्छेत् ) आजानेयकृतम् ( कुलीनाश्वकृतं कर्म युद्धेऽनवसादरूपम् ) स्मरन् ( ध्यायन् ) सत्त्वम् ( पुरुषार्थम् ) मानम् ( अभिमानम् ) च कुरु ( सम्पादय ) आत्मनः ( स्वस्य ) पौरुषम् ( पुरुषार्थम् ) विद्धि ( आप्नुहि ) ।

व्युत्पत्तिः—आजानेयाः ( केचित् अश्वाः ) तेषां कृतम् इति ष०तत्पु० ।

भावार्थः—जैसे आजानेय घोड़े युद्ध में पीछे न हट कर भार ढोते रहते हैं आगे बढ़ते रहते हैं, वैसेही तूभी बल दिखा कर प्रतिष्ठा की प्राप्ति कर । अपने स्वरूप को न भूल ॥२१॥

उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ।
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ॥२२॥

पदच्छेदः—उद्भावय, कुलम्, मग्नम्, त्वत्कृते, स्वयम्, एव, हि, यस्य, वृत्तम्, न, जल्पन्ति, मानवाः, महत्, अद्भुतम् ।

अन्वयः—हि, त्वत्कृते, स्वयम्, एव, मग्नम्, कुलम्, उद्भावय, मानवाः, यस्य, वृत्तम्, महत्, अद्भुतम्, न, जल्पन्ति ।

व्याख्या—हि त्वत्कृते ( त्वन्निमित्तम् ) स्वयम् एव ( स्वत एव ) मग्नम् ( पतितम् ) कुलम् ( वंशम् ) उद्भावय ( उद्धारय ) मानवाः ( मनुष्याः ) यस्य

( तव ) वृत्तम् ( वृत्तान्तम् ) महत् ( अत्यन्तम् ) अद्भुतम् ( क्षत्रियकुलार्हम् ) न जल्पन्ति ( न वदन्ति )

व्युत्पत्तिः—तुभ्यमिति त्वत्कृते त्वदर्थमिति यावत् । मनुष्या मानवा नरा इति कोषः ।

भावार्थः—अरे ! यह कुल तुम्हारे कारण डूब रहा है, इस लिए तू इस के उद्धार का उपाय कर । जिस मनुष्य के उत्तम कृत्यों का गान जगत् न करे वह पुरुष अथवा स्त्री कोई भी व्यर्थ है ॥२२॥

राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ।
दाने तपसि सत्ये च यस्य नोच्चरितं यशः ॥२३॥

पदच्छेदः—राशिवर्द्धनमात्रम् , सः, न, एव, स्त्री, न, पुनः, पुमान् , दाने, तपसि, सत्ये, च, यस्य, न उच्चरितम् , यशः ।

अन्वयः—यस्य, दाने, तपसि, सत्ये, च, यशः, न, उच्चरितम् , सः, राशिवर्द्धनमात्रम् , स्त्री, न, पुनः, पुमान् , न ।

व्याख्या—यस्य ( पुरुषस्य ) दाने ( विद्याधनाद्युत्सर्गे ) तपसि ( तपश्चर्यायाम् ) सत्ये ( सत्यव्यवहारादौ ) च यशः ( सुकीर्तिः ) न उच्चरितम् ( न प्रसिद्धम् ) सः ( पुरुषः ) राशिवर्द्धनमात्रम् ( संख्यापूरणप्रयोजनः ) अन्यप्रयोजनायोग्य इत्यर्थः । स्त्री ( योषित् ) न, पुनः ( भूयः ) पुमान् ( पुरुषः ) अपि न । सर्वथा व्यर्थ इति भावः ।

व्युत्पत्तिः—केवलं राशिं संख्यां वर्द्धयते पूरयते इति राशिवर्द्धनमात्रम् । मात्रं कार्त्स्न्येऽवधारणे इति कोशात् ।

भावार्थः—जिस व्यक्ति का नाम दान, तप, सत्य आदि में, मशहूर न हो, केवल जनसंख्या को बढ़ाने वाला न स्त्री ही है न पुरुष ही किन्तु वह सर्वथा निरर्थक है ॥२३॥

विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।
श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ॥२४॥

पदच्छेदः—विद्यायाम् , अर्थलाभे, वा, मातुरुच्चारः, एव, सः, श्रुतेन, तपसा, वा, अपि, श्रिया, वा, विक्रमेण, वा ।

अन्वयः—विद्यायाम् , अर्थलाभे वा ( यस्य यशः न उच्चरितम् ) सः मातुरुच्चारः एव, श्रुतेन, तपसा, वा, श्रिया, विक्रमेण अपि, वा ।

व्याख्या—विद्यायाम् ( आन्वीक्षिक्यादौ ) अर्थलाभे ( धनप्राप्तौ ) वा यस्य यशः न प्रसिद्धम् सः ( तादृशः पुरुषः ) मातुः ( जनन्याः ) उच्चारः ( विष्ठा )

एव । श्रुतेन ( शास्त्रेण ) तपसा ( तपस्यया ) श्रिया ( लक्ष्म्या ) विक्रमेण ( प्रतापेन ) अपि वा । यः जनान् अभिभवतीत्युत्तरेण सम्बन्धः ।

व्युत्पत्तिः—आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
एता विद्याश्चतस्तु लोकसंस्थितिहेतवः ॥

भावार्थः—जिस व्यक्ति की राजनीति आदि विद्याओं में, धन की प्राप्ति में कीर्ति न हो जाय वह केवल माता के विष्ठा के समान है । जो तपस्या, अध्ययन, लक्ष्मी तथा प्रताप के द्वारा अन्य व्यक्तियों कों लाँघ जाता है वही आदरणीय होता है ॥२४॥

जनान्योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ।
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ॥२५॥

पदच्छेदः—जनान्, यः, अभिभवति, अन्यान्, कर्मणा, हि, सः, वै, पुमान्, न तु एव, जाल्मीम्, कापालीम्, वृत्तिम्, एषितुम्, अर्हसि ।

अन्वयः—हि, यः, कर्मणा, अन्यान्, जनान्, अभिभवति, सः, वै, पुमान्, जाल्मीम्, कापालीम्, वृत्तिम्, तु, एषितुम्, न, अर्हसि ।

व्याख्या—हि ( निश्चयेन ) यः ( मनुष्यः ) कर्मणा ( स्वयोग्येन ) अन्यान्, ( स्वेतरान ) जनान् ( पुरुषान् ) अभिभवति ( लङ्घयते ) सः वै ( स एव ) पुमान् ( मान्यः पुरुषः ) अतः त्वम् जाल्मीम् ( अविचारशालिनीम् ) कापालीम् ( कपालसाध्याम् ) वृत्तिम् ( कृतिम् ) भिक्षाम् इत्यर्थः, एषितुम् ( अधिगन्तुम् ) न, अर्हसि ( योग्योऽसि )

व्युत्पत्तिः—जाल्मोऽसमीक्ष्यकारी स्यात् इति कोशः । जाल्मस्य इयं जाल्मी ताम् ।

भावार्थः—जो व्यक्ति अपने प्रतिष्ठित कर्मों द्वारा दूसरे व्यक्तियों को लाँघ जाता है अर्थात् वेजोड़ रहता है वह ही आदरणीय मनुष्य है । अतः तुम उस नीच भिक्षावृत्ति से जीने की इच्छा न करो । वह तुम्हारे लिए उचित नहीं है ।

नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ।
यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ॥२६॥

पदच्छेदः—नृशंस्याम्, अयशस्याम्, च, दुःखाम्, कापुरुषोचिताम्, यम्, एनम्, अभिनन्देयुः, अमित्राः, पुरुषम्, कृशम् ।

अन्वयः—नृशंस्याम्, अयशस्याम्, च, दुःखाम्, कापुरुषोचिताम् ( वृत्तिम् एषितुम् न अर्हसि इति पूर्वेण अन्वयः ) अमित्राः, यम्, एनम्, कृशम्, पुरुषम्, अभिनन्देयुः ।

व्याख्या—नृशंस्याम् ( क्रूराम् ) अयशस्याम् ( अकीर्त्तिकारिणीम् ) च दुःखाम् ( दुःखदाम् ) कापुरुषोचिताम् ( निन्दनीयपुरुषयोग्याम् ) वृत्तिम् चरितुम् नार्हसि इति पूर्वेण सम्बन्धः। अमित्राः ( शत्रवः ) यम् एनम् ( प्रभुम् ) कृशम् ( दुर्बलम् ) पुरुषम् ( नरम् ) अभिनन्देयुः ( प्रसीदेयुः ) तम् एनम् बन्धुमासाद्य बान्धवः सुखम् नैधते इति तृतीयेन सम्बन्धः।

व्युत्पत्तिः—नृशंसो घातुकः क्रूरः इत्यमरः। नृशंसेभ्यः उचिता ताम्। न यशस्या ताम्। कापुरुषेभ्यः = उचिता ताम्, चतु० तत्पु०। दुःखमस्त्यस्यां सा दुःखा ताम्।

भावार्थः— क्रूर तथा नीच पुरुषों वाली दुर्वृत्ति पर न जा। शत्रु जिसे देख कर प्रसन्न हों वह पुरुष बन्धुओं के लिए सुखद नहीं होता ॥२६॥

लोकस्य समवज्ञातं निहीनासनवाससम्।
अहो लाभकरं हीनमल्पजीवनमल्पकम् ॥२७॥

पदच्छेदः—लोकस्य, समवज्ञातम्, निहीनासनवाससम्, अहो, लाभकरम्, हीनम्, अल्पजीवनम्, अल्पकम्।

अन्वयः—लोकस्य, समवज्ञातम्, निहीनासनवाससम् अहो लाभकरम्, हीनम्, अल्पजीवनम्, अल्पकम् ( ईदृशम् बन्धुमिति परेणाऽन्वयः )

व्याख्या—लोकस्य ( संसारस्य ) समवज्ञातम् ( अपमानितम् ) निहीनासनवाससम् ( उत्तमवस्त्रासनादिरहितम् ) अहो लाभकरम् ( स्वार्थशीलम् ) अथवा स्वल्पेऽपि लाभे अहो लाभो जात इति मानिनम्। हीनम् ( लघुम् ) अल्पजीवनम् ( ईषज्जीवनम् ) अल्पकम् ( बन्धुमासाद्य बान्धवः सुखम् नैधते )।

व्युत्पत्तिः—आसनं च वासश्च आसनवाससी निहीने आसनवाससी यस्य तम् बहुव्रीहिः, अल्पं जीवनं यस्य तम् अत्रापि बहुव्रीहिसमासः।

भावार्थः— जिसे अन्नवस्त्र की कमी हो, थोड़े लाभ से भी सन्तुष्ट हो जाय, क्षुद्र तथा थोड़े उत्साहवाले व्यक्ति को पाकर उसके सम्बन्धी भी उससे सुख नहीं प्राप्त करते ॥२७॥

नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते।
अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात् प्रवासिताः ॥२८॥

पदच्छेदः—न, ईदृशम्, बन्धुम्, आसाद्य, बान्धवः, सुखम्, एधते, अवृत्त्या, एव, विपत्स्यामः, वयम्, राष्ट्रात्, प्रवासिताः।

अन्वयः—ईदृशम्, बन्धुम्, आसाद्य, बान्धवः, सुखम्, न, एधते, वयम्, राष्ट्रात्, प्रवासिताः, अवृत्त्या, एव, विपत्स्यामः।

व्याख्या—ईदृशम् ( अतिगर्हितम् ) बन्धुम् ( भ्रातरम् ) आसाद्य (अवाप्य) बान्धवः ( परिजनः ) सुखम् ( आनन्दम् ) न, एधते (लभते) वयम् (मदादिकाः सर्वे ) राष्ट्रात् ( राज्यात् ) प्रवासिताः ( निष्कासिताः ) अवृत्त्या ( वृत्त्यभावेन ) एव, विपत्स्यामः ( दुःखम् अधिगमिष्यामः ) मरिष्याम इति यावत् ।

व्युत्पत्तिः—वृत्तिः प्रोक्ता तु जीविका । प्रवसेर्ण्यन्तात् कर्मणि क्तः ।

भावार्थः—पूर्व में कहे हुये गर्हितबन्धुको प्राप्तकर कुल का नाश हो जाता है। अतः हम लोग जीविकारहित, राज्य से निकाले जाने का दण्ड पाकर मर जायँगे ॥

सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिञ्चनाः ।
अवल्गुकारिणं सत्सु कुलवंशस्य नाशनम् ॥२९॥

पदच्छेदः—सर्वकामरसैः, हीनाः, स्थानभ्रष्टाः, अकिञ्चनाः, अवल्गुकारिणम् , सत्सु, कुलवंशस्य, नाशनम् ।

अन्वयः—सर्वकामरसैः, हीनाः, स्थानभ्रष्टाः, अकिञ्चनाः ( वयम् प्रवासिताः विपत्स्यामः इति पूर्वेणान्वयः ) सत्सु, अवल्गुकारिणम् , कुलवंशस्य, नाशनम् ( त्वाम् अजीजनम् इति परेणान्वयः )

व्याख्या—सर्वकामरसैः ( निखिलसुखैः ) हीनाः ( रहिताः ) स्थानभ्रष्टाः ( स्थानरहिताः ) अकिञ्चनाः ( सर्वथा दरिद्राः ) वयम् विपत्स्यामः इति पूर्वेण सम्बन्धः । सत्सु ( सज्जनेषु ) अवल्गुकारिणम् ( अमङ्गलकारिणम् ) कुलवंशस्य ( कुलस्य ज्ञातेः , वंशस्य सोमसूर्यादेः ) नाशनम् ( भ्रंशयितारम् ) त्वाम् अजीजनमिति परेण सम्बन्धः ।

व्युत्पत्तिः—सर्वे च ते कामरसाः तैः कर्मधारयः । स्थानेभ्यः भ्रष्टाः पञ्चमीसमासः । नास्ति किञ्चन येषां ते, मयूरव्यंसकादित्वात् समासः । कुलानि च वंशाश्चेति समाहारः ।

भावार्थः—सब सुखों से हीन, स्थान हीन, सर्वथा दरिद्र बन कर हम लोग मर जायँगे । हमने ऐसे अमङ्गलकारी निरुत्साह, कुलकलङ्क तुम जैसे पुत्र को क्यों पैदा किया ॥२९॥

कलिं पुत्रप्रवादेन सञ्जय ! त्वामजीजनम् ।
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ॥३०॥

पदच्छेदः—कलिम् , पुत्रप्रवादेन, सञ्जय ! त्वाम् , अजीजनम् , निरमर्षम् , निरुत्साहम् , निर्वीर्यम्, अरिनन्दनम् ।

अन्वयः - हे सञ्जय ! कलिम् , निरमर्षम् , निरुत्साहम्, निर्वीर्यम् , अरिनन्दनम् , त्वाम् , पुत्रप्रवादेन, अजीजनम् ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) कलिम् ( साक्षात् पापावतारम् ) निरमर्षम् ( अक्रोधम् ) निरुत्साहम् ( उत्साहरहितम् ) निर्वीर्यम् ( अपराक्रमम् ) अरिनन्दनम् ( शत्रुप्रसादकम् ) त्वाम् पुत्रप्रवादेन ( पुत्रनाम्ना ) अजीजनम् ( उदपादयम् ) न साधारणदुःखस्य विषयः ।

व्युत्पत्तिः—निर्गतः अमर्षः यस्मात् तम् । निर्गतः उत्साहः यस्मात् तम् । निर्गतं वीर्यम् यस्मात् तम् । अत्र सर्वत्र बहुव्रीहिः । अरीन् नन्दयते इति तत्पुरुषः । पुत्र इति प्रवादः तेन ।

भावार्थः—हे सञ्जय ! मैंने तुम जैसे कलियुग के रूप, क्रोधहीन, दीन तथा शत्रुओं की प्रसन्नता को बढ़ानेवाले पुत्रको व्यर्थ ही उत्पन्न किया ।

मास्म सोमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ।
मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ॥३१॥

पदच्छेदः—मास्म, सीमन्तिनी, काचित्, जनयेत्, पुत्रम्, ईदृशम्, मा, धूमाय, ज्वल, अत्यन्तम्, आक्रम्य, जहि, शात्रवान् ।

अन्वयः—काचित्, सीमन्तिनी, ईदृशम्, पुत्रम्, मास्म जनयेत्, धूमाय, अत्यन्तम्, मा, ज्वल, आक्रम्य, शात्रवान्, जहि ।

व्याख्या—काचित् ( कापि ) सीमन्तिनी ( स्त्री ) ईदृशम् ( नीचम् ) पुत्रम् ( सुतम् ) मास्म जनयेत् ( नोत्पादयेत् ) हे पुत्र ! धूमाय ( अयशसे ) अत्यन्तम् ( अधिकम् ) मा ज्वल ( मा दीप्यस्व ) किन्तु आक्रम्य ( आक्रमणं कृत्वा ) शात्रवान् ( शत्रुगणान् ) जहि ( नाशय ) इदमेव ते उचितम् ।

व्युत्पत्तिः—सीमन्तः केशवेशे, सोऽस्त्यस्याः इति विग्रहः । आक्रम्—क्त्वा ( ल्यप् ) आक्रम्य ।

भावार्थः—कोई भी स्त्री तुम जैसे नालायक पुत्र को न पैदा करे । अरे नालायक ! इतना सुनकर भी उठ, शत्रुओं पर आक्रमण करके उनका संहार कर यही उचित है ॥३१॥

ज्वल मूर्धन्यमित्राणां मुहूर्त्तमपि वा क्षणम् ।
एतावानेव पुरुषो यदमर्षी यदक्षमी ॥३२॥

पदच्छेदः—ज्वल, मूर्द्धनि, अमित्राणाम्, मुहूर्त्तम्, अपि, वा, क्षणम्, एतावान्, एव, पुरुषः, यत्, अमर्षी, यत्, अक्षमी ।

अन्वयः—अमित्राणाम्, मूर्द्धनि, मुहूर्त्तम्, क्षणम्, अपि, वा, ज्वल, एतावान्, एव, पुरुषः, यत्, अमर्षी, यत्, अक्षमी ।

व्याख्या—अमित्राणाम् ( शत्रूणाम् ) मूर्द्धनि ( शिरसि ) मुहूर्त्तम् ( घटी-

द्वयपर्यन्तम् ) क्षणम् ( एकक्षणम् ) अपि वा ज्वल ( दीप्यस्व ) एतावान् एव ( ईदृशः एव ) पुरुषः ( प्रशस्तपुरुषः ) यत् अमर्षी ( क्रोधवान् ) यत् अक्षमी ( क्षमारहितः ) समये शत्रून् न क्षमते इत्यर्थः ।

व्युत्पत्तिः—मुहूर्तम् द्विघटीमितम् इति कोषः ।

भावार्थः—शत्रुओं के मस्तक पर दोही घड़ी के लिए अथवा कम से कम क्षण भर के ही लिए चमक जा, पुरुषता यही है कि समय पर क्रोध न छोड़ना। तथा शत्रु पर जरा भी दया न करना ॥३२॥

क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ॥३३॥

पदच्छेदः—क्षमावान्, निरमर्षः, च, न, एव, स्त्री, न, पुनः, पुमान्, सन्तोषः, वै, श्रियम्, हन्ति, तथा, अनुक्रोशः, एव, च ।

अन्वयः—क्षमावान्, निरमर्षः, च, स्त्री, न, पुनः, पुमान्, एव, न, वै, सन्तोषः, तथा, एव, च, अनुक्रोशः, श्रियम्, हन्ति ।

व्याख्या—क्षमावान् ( क्षमी ) निरमर्षः ( अक्रोधः ) च स्त्री ( नारी ) न पुनः ( भूयः ) पुमान् ( पुरुषः ) एव ( अपि ) न वै सन्तोषः ( सन्तुष्टता ) तथा एव च अनुक्रोशः ( दयालुता ) श्रियम् ( लक्ष्मीम् ) हन्ति ( दलयति ) तस्मात् मनस्विना सन्तोषः दया च नालम्बनीयेति भावः ।

व्युत्पत्तिः—निर्गतः अमर्षः यस्मात् सः । अत्र बहुव्रीहिः ।

भावार्थः—शत्रु को क्षमा करनेवाला, क्रोधहीन व्यक्ति न स्त्री ही है न पुरुष ही । क्योंकि सन्तोष तथा दया इन दोनों से लक्ष्मी का नाश होता है ॥३३॥

अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।
एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ॥३४॥

पदच्छेदः—अनुत्थानभये, च, उभे, निरीहः, न, अश्नुते, महत्, एभ्यः, निकृतिपापेभ्यः, प्रमुञ्च, आत्मानम्, आत्मना ।

अन्वयः—अनुत्थानभये, च, उभे ( श्रियं हतः इति पूर्वान्वयी ) निरीहः, महत्, न, अश्नुते, निकृतिपापेभ्यः, एभ्यः, आत्मना, आत्मानम्, प्रमुञ्च ।

व्याख्या—अनुत्थानभये ( अनुत्थानम् शत्रुप्रत्यनवस्थानम्, भयं भीतिः इति उभे ) श्रियम् हतः इति भावः । निरीहः ( निश्चेष्टः ) महत् ( उन्नतम् पदम् ) न अश्नुते ( प्राप्नोति ) निकृतिपापेभ्यः ( पराभवदोषेभ्यः ) एभ्यः ( एतेभ्यः ) आत्मना ( स्वयम् ) आत्मानम् ( स्वम् ) प्रमुञ्च ( मोचय ) निष्पापो भवेत्यर्थः ।

व्युत्पत्तिः—अनुत्थानं च भयं चेति द्वन्द्वः। निर्गता ईहा यस्मात् सः। निकृतयः एव पापानि तेभ्यः।

भावार्थः—शत्रु के प्रति चढ़ाई न करना तथा उससे डरना इन दो कारणों से भी लक्ष्मी दूर हट जाती है। सन्तुष्ट व्यक्ति कदापि उन्नति नहीं कर पाता। अतः इन पराजय रूप पापों से अपने को अपने आप छुड़ा ॥३४॥

आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम्।
परं विषहते यस्मात्तस्मात् पुरुष उच्यते ॥३५॥

पदच्छेदः—आयसम्, हृदयम्, कृत्वा, मृगयस्व, पुनः, स्वकम्, परम्, विषहते, यस्मात्, तस्मात्, पुरुषः, उच्यते।

अन्वयः—हृदयम्, आयसम्, कृत्वा, पुनः, स्वकम्, मृगयस्व, यस्मात्, परम्, विषहते, तस्मात्, पुरुषः, उच्यते।

व्याख्या—हृदयम् ( चेतः ) आयसम् ( लौहम् ) कृत्वा ( विधाय ) पुनः ( भूयः ) स्वकम् ( स्वम् ) मृगयस्व ( अन्विष्यताम् ) यस्मात् ( यतः ) परम् ( अन्यम् धनादिकम् वा ) विषहते ( सम्पादयते ) तस्मात् ( ततः ) पुरुषः ( पुरुष इति संज्ञः ) उच्यते ( कथ्यते )

व्युत्पत्तिः—अयोविकारः आयसम्, विकारार्थेऽण्। स्व एव स्वकः तम्। अव्ययसर्वनाम्नामकच्।

भावार्थः—हृदय को लोहे का बनाकर अपने राज्य तथा धन को खोज। जो ऐसा करता है वही पुरुष कहलाता है ॥३५॥

तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति।
शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तचारिणः ॥३६॥

पदच्छेदः—तम्, आहुः, व्यर्थनामानम्, स्त्रीवत्, यः, इह, जीवति, शूरस्य, ऊर्जितसत्त्वस्य, सिंहविक्रान्तचारिणः।

अन्वयः—यः, इह, स्त्रीवत्, जीवति, तम्, व्यर्थनामानम्, आहुः, ऊर्जितसत्त्वस्य, सिंहविक्रान्तचारिणः, शूरस्य ( विषये प्रजा मोदते इति परेणान्वयः )।

व्याख्या—यः ( पुरुषविशेषः ) इह ( लोके ) स्त्रीवत् ( नारीव ) जीवति ( प्राणिति ) तम् ( तादृशम् ) व्यर्थनामानम् ( व्यर्थाभिधानम् ) आहुः ( कथयन्ति ) ऊर्जितसत्त्वस्य ( प्रबलस्य ) सिंहविक्रान्तचारिणः ( सिंहगतेः ) शूरस्य ( वीरस्य ) विषये प्रजा मोदते इति परेणान्वयः।

व्युत्पत्तिः—स्त्री इव स्त्रीवत्। व्यर्थं नाम यस्य तम्, ऊर्जितं सत्त्वं यस्य तस्य। उभयत्र बहुव्रीहिः। सिंहविक्रान्त इव चरति तस्य।

भावार्थः—जो इस संसार में स्त्रियों की तरह लज्जित होकर जीता है उसका नाम घराना व्यर्थ है । सिंह के समान चलनेवाला, तेजस्वी तथा शूरवीर ( मर भी जाय तो प्रजा उसे याद करती है ) ॥३६॥

दिष्टभावं गतस्यापि विषये मोदते प्रजा ।
य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम् ॥३७॥
अमात्यानामथो हर्षमादधात्यचिरेण सः ॥३८॥

पदच्छेदः—दिष्टभावम्, गतस्य, अपि, विषये, मोदते, प्रजा, यः, आत्मनः, प्रियसुखे, हित्वा, मृगयते, श्रियम्, अमात्यानाम्, अथो, हर्षम्, आदधाति, अचिरेण, सः ।

अन्वयः—दिष्टभावम्, गतस्य, अपि, विषये, प्रजा, मोदते, यः, आत्मनः, प्रियसुखे, हित्वा, श्रियम्, मृगयते, अथो, सः, अचिरेण, अमात्यानाम्, हर्षम्, आदधाति ।

व्याख्या—दिष्टभावम् ( मृत्युम् ) गतस्य ( प्राप्तस्य ) अपि राज्ञः विषये ( निमित्तम् ) प्रजा ( राष्ट्रजनः ) मोदते ( प्रसीदति ) यः ( राजा ) आत्मनः ( स्वस्य ) प्रियसुखे ( प्रियम् पुत्रादि, तत्परिष्वङ्गादिजो हर्षः सुखम् ते द्वे ) हित्वा ( परित्यज्य ) श्रियम् ( लक्ष्मीम् ) मृगयते (अन्विष्यति) अथो ( अथ ) सः (नृपः) अचिरेण ( शीघ्रम् ) अमात्यानाम् ( मन्त्रिणाम् ) हर्षम् ( प्रसादम् ) आदधाति ( सम्पादयति )

व्युत्पत्तिः—प्रियं च सुखं च प्रियसुखे द्वन्द्वः ।

भावार्थः—पुरुषार्थी तथा वीर राजा के मर जाने पर भी प्रजा उसमें सम्मान रखती है । जो राजा अपने पुत्र परिवारादि के सुख की चिन्ता न कर केवल राज्य-लक्ष्मीका ही अनुगामी होता है मन्त्रिगण शीघ्र ही उस पर प्रसन्न हो जाते हैं, तथा लक्ष्मी के साधक बन जाते हैं ॥३७–३८॥

## पुत्र उवाच ।

किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥३९॥

पदच्छेदः—किम्, नु, ते, माम्, अपश्यन्त्याः, पृथिव्या, अपि, सर्वया, किम्, आभरणकृत्यम्, ते, किम्, भोगैः, जीवितेन, वा ।

अन्वयः—नु, माम्, अपश्यन्त्याः, ते, सर्वया, पृथिव्या, अपि, किम्, ते, आभरणकृत्यम्, किम्, भोगैः, जीवितेन, वा, किम् ।

व्याख्या—हे मातः ! नु ( वितर्के ) माम् ( पुत्रम् ) अपश्यन्त्याः ( अनालोकयन्त्याः ) ते ( तव ) सर्वया ( सम्पूर्णया ) अपि पृथिव्या ( भूम्या ) किम् ( किम् प्रयोजनम् ? ) ते ( तव ) आभरणकृत्यम् ( भूषणकार्यम् ) किम् (व्यर्थम्) भोगैः ( सुखाद्युपभोगैः ) जीवितेन ( जीवनेन ) वा किम् ? न किमपि इत्यर्थः ।

व्युत्पत्तिः—पश्यति इति पश्यन्ती, न पश्यन्ती अपश्यन्ती तस्याः । आभरणानां कृत्यम् आभरणकृत्यम् ।

भावार्थः—पुत्र ने कहा कि हे मातः ! मुझ पुत्र को न देखती हुई तुम्हारे लिए समस्त पृथ्वी का राज्य, गहने, समस्त सुखों के साधन तुम्हें क्या सुख देंगे ? फिर तुम्हारे जीवन से ही क्या होगा ? ॥३९॥

## मातोवाच ।

किमद्यकानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान् व्रजन्तु नः ॥४०॥

पदच्छेदः—किमद्यकानाम् , ये, लोकाः, द्विषन्तः, तान् , अवाप्नुयुः, ये, तु, आदृतात्मनाम् , लोकाः, सुहृदः, तान् , व्रजन्तु, नः ।

अन्वयः—ये, किमद्यकानाम् , लोकाः, नः, द्विषन्तः, तान् , अवाप्नुयुः, आदृतात्मनाम् , ये, लोकाः ( नः ) सुहृदः, तान् , व्रजन्तु ।

व्याख्या—ये किमद्यकानाम् ( दरिद्राणाम् ) लोकाः ( भुवनानि ) नः ( अस्माकम् ) द्विषन्तः ( शत्रवः ) तान् ( लोकान् ) अवाप्नुयुः ( प्राप्नुयुः ) आदृतात्मनाम् ( आदरणीयानाम् ) ये लोकाः नः सुहृदः ( मित्राणि ) तान् व्रजन्तु ( गच्छन्तु )

व्युत्पत्तिः—किम् अद्यं किम् भोक्तव्यं इति ये चिन्तयन्ति ते किमद्यकाः ( निर्धनाः ) तेषां लोकाः तान् ( ष. तत्पु. ) यद्वा किम् अद्य त्वरया श्व एव शत्रून् जेष्यामः इति ये चिन्तयन्ति ते किमद्यकाः विलम्बशीलाः तेषां लोकाः तान् । आदृतः आत्मा येषां तेषाम् बहुव्रीहिः । सुष्ठु हृदयं येषां ते सुहृदः बहुव्री० । सुहृद्दुर्हृदौ मित्रामित्रयोः इति पाणिनिः ।

भावार्थः—माता ने कहा कि "आज क्या खायँगे" ऐसी चिन्ता करनेवाले निर्धनों के लोक को हमारे शत्रु प्राप्त हों, प्रतिष्ठित लोगों के लोकों को हमारे मित्रगण प्राप्त हों ॥४०॥

१—अनादृतानाम् इति पाठान्तरम् । शस्त्रैरक्षतानामित्यर्थः ।
अनादृतानामिति पाठे तु अलसानाम् इत्यर्थः ।

भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ॥४१॥

**पदच्छेदः**—भृत्यैः, विहीयमानानाम्, परपिण्डोपजीविनाम्, कृपणानाम्, असत्त्वानाम्, मा, वृत्तिम्, अनुवर्त्तिथाः ।

**अन्वयः**—भृत्यैः, विहीयमानानाम्, परपिण्डोपजीविनाम्, कृपणानाम्, असत्त्वानाम्, वृत्तिम्, मा, अनुवर्त्तिथाः ।

**व्याख्या**—भृत्यैः, ( सेवकैः ) विहीयमानानाम् ( परित्यज्यमानानाम् ) परपिण्डोपजीविनाम् ( परान्नभोजिनाम् ) कृपणानाम् ( कातराणाम् ) असत्त्वानाम् ( निर्बलानाम् ) वृत्तिम् ( व्यवहारम् ) मा अनुवर्त्तिथाः ( न अनुवर्त्तस्व )

**व्युत्पत्तिः**—विहीयन्ते इति विहीयमानाः तेषाम् । वि + हा + यक् + शानच् । परपिण्डेन उप जीवन्ति परपिण्डोपजीविनः तेषाम् । नास्ति सत्त्वं येषां तेषाम् बहुव्रीहिः ।

**भावार्थः**—सेवकों से हीन, दूसरों के दिए हुए अन्न से जीविका करनेवाले, कातर तथा निर्बल पुरुषों की वृत्ति तू मत धारण कर । किन्तु महापुरुषों का अनुकरण कर ॥४१॥

अनु त्वां तात ! जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥४२॥

**पदच्छेदः**—अनु, त्वाम्, तात ! जीवन्तु, ब्राह्मणाः, सुहृदः, तथा, पर्जन्यम्, इव, भूतानि, देवाः, इव, शतक्रतुम् ।

**अन्वयः**—हे तात ! त्वाम्, अनु, ब्राह्मणाः, तथा, सुहृदः, पर्जन्यम्, भूतानि, इव, शतक्रतुम्, देवाः, इव, जीवन्तु ।

**व्याख्या**—हे तात ! ( हे पुत्र ! ) त्वाम् ( सञ्जयम् ) अनु ( पश्चात् ) ब्राह्मणाः ( द्विजाः ) तथा सुहृदः ( मित्राणि ) पर्जन्यम् ( मेघम् ) भूतानि ( जीवाः ) इव ( यथा ) शतक्रतुम् ( इन्द्रम् ) देवाः ( अमराः ) इव ( यथा ) जीवन्तु ( जीविकां निर्वाहयन्तु )

**व्युत्पत्तिः**—शतं क्रतवो यस्य तम् बहुव्रीहिः ।

**भावार्थः**—हे पुत्र ! जैसे संसारी जीव मेघपर, देवगण भगवान् इन्द्र पर अपनी जीविका निर्भर करते हैं, वैसे ही ब्राह्मण लोग तथा तुम्हारे मित्रमण्डल तुम पर अपनी जीविका निर्भर कर सकें ॥४२॥

यमाजीवन्ति पुरुषं सर्वभूतानि सञ्जय ! ।
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥४३॥

पदच्छेदः—यम् , आजीवन्ति, पुरुषम् , सर्वभूतानि, सञ्जय ! पक्कम् , द्रुमम् , इव, आसाद्य, तस्य, जीवितम् , अर्थवत् ।

अन्वयः—हे सञ्जय ! पक्कम् , द्रुमम् , इव, यम् , पुरुषम् , आसाद्य, सर्व-भूतानि, जीवन्ति, तस्य, जीवितम् , अर्थवत् ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) पक्कम् ( सफलम् ) द्रुमम् ( वृक्षम् ) इव ( यथा ) यम् पुरुषम् ( नरविशेषम् ) आसाद्य ( आश्रित्य ) सर्वभूतानि ( सर्वे प्राणिनः ) जीवन्ति ( समेधन्ते ) तस्य ( पुरुषविशेषस्य ) जीवितम् ( जीवनम् ) अर्थवत् ( सार्थकम् ) युक्तमित्यर्थः ।

व्युत्पत्तिः—पच् + क्तः ( पचो वः ) । अर्थः अस्य अस्मिन् वा अस्तीत्य-र्थवत् मतुप्प्रत्ययान्तः ।

भावार्थः—हे सञ्जय ! जैसे पके फलवाले पेड़ के आश्रय अनेक जीव पलते हैं, वैसे ही जिस मनुष्य से अनेक जीवों का पालन हो उसी का जीवन सार्थक है ।

यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।<br>
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥४४॥

पदच्छेदः—यस्य, शूरस्य, विक्रान्तैः, एधन्ते, बान्धवाः, सुखम् , त्रिदशाः, इव, शक्रस्य, साधु, तस्य, इह, जीवितम् ।

अन्वयः—शक्रस्य, त्रिदशाः, इव, यस्य, शूरस्य, विक्रान्तैः, बान्धवाः, सुखम् , एधन्ते, इह, तस्य, जीवितम् , साधु ।

व्याख्या—शक्रस्य ( इन्द्रस्य ) त्रिदशाः ( देवाः ) इव ( यथा ) यस्य शूरस्य ( वीरस्य ) विक्रान्तैः ( पराक्रमैः ) बान्धवाः ( परिजनाः ) सुखम् ( सान-न्दम् ) एधन्ते ( वर्द्धन्ते ) इह ( संसारे ) तस्य ( नररत्नस्य ) जीवितम् ( जीवनम् ) साधु ( उत्तमम् ) प्रोच्यते इति शेषः ।

व्युत्पत्तिः—विक्रान्तैः ( विक्रम + क्तः भावे ) विक्रमणानि विक्रान्तानि तैः विक्रमैः इत्यर्थः । सुखम् इति क्रियाविशेषणम् ।

भावार्थः—जैसे इन्द्र के पराक्रम से देवता वैसे ही जिस शूरवीर के पराक्रम से बन्धुवर्ग सुख प्राप्त करे उसी का जीवन इस जगत् में सार्थक है ॥४४॥

स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।<br>
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥४५॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि<br>
विदुलपुत्रानुशासने त्रयस्त्रिंशाधिकशततमोऽध्यायः ॥१३३॥

पदच्छेदः—स्वबाहुबलम्, आश्रित्य, यः, अभ्युज्जीवति, मानवः, सः, लोके, लभते, कीर्तिम्, परत्र, च, शुभाम्, गतिम् ।

अन्वयः—यः, मानवः, स्वबाहुबलम्, आश्रित्य, अभ्युज्जीवति, सः, लोके, कीर्त्तिम्, परत्र, च, शुभाम्, गतिम्, लभते ।

व्याख्या—यः मानवः ( मनुष्यः ) स्वबाहुबलम् ( स्वभुजपराक्रमम् ) आश्रित्य ( आलम्ब्य ) अभ्युज्जीवति ( संवर्द्धते ) सः ( पुरुषविशेषः ) लोके ( संसारे ) कीर्त्तिम् ( यशः ) परत्र ( परलोके ) च शुभाम् ( उत्तमाम् ) गतिम् ( पदवीम् ) लभते ( प्राप्नोति )

व्युत्पत्तिः—स्वस्य बाहू स्वबाहू, स्वबाह्वोः बलम् स्वबाहुबलम् ( तत्पुरुषः ) अभि + उत् + जीवति = अभ्युज्जीवति ।

भावार्थः—जो मनुष्य अपने बाहुबल के सहारे संसार में पराक्रम करता रहता है वह इस लोक में कीर्त्ति तथा परलोक में उत्तम गति पाता है ॥४५॥

इति महाभारतीये विदुलोपाख्याने श्रीराजनारायणशास्त्रिशुक्लरचितायां प्रभाटीकायां प्रथमोऽध्यायः ।



# अथ द्वितीयोऽध्यायः ।

## विदुलोवाच ।

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥१॥

पदच्छेदः—अथ, एतस्याम्, अवस्थायाम्, पौरुषम्, हातुम्, इच्छसि, निहीनसेवितम्, मार्गम्, गमिष्यसि, अचिरात्, इव ।

अन्वयः—अथ, एतस्याम्, अवस्थायाम्, पौरुषम्, हातुम्, इच्छसि, अचिरात्, इव, निहीनसेवितम्, मार्गम्, गमिष्यसि ।

व्याख्या—अथ ( अनन्तरम् ) एतस्याम् ( वर्तमानायाम् ) अवस्थायाम् ( दशायाम् ) पौरुषम् ( पुरुषकारम् ) हातुम् ( त्यक्तुम् ) इच्छसि ( कामयसे ) अचिरात् ( शीघ्रम् ) इव ( यथा ) निहीनसेवितम् ( नीचसेवितम् ) मार्गम् ( पन्थानम् ) गमिष्यसि ( व्रजिष्यसि ) ।

व्युत्पत्तिः—निहीनैः सेवितः निहीनसेवितः, तम् ।

भावार्थः—विदुला ने कहा कि हे पुत्र ! अगर इस अवस्था में तुम पुरुषार्थ छोड़ना चाहते हो तो थोड़े ही समय में नीचसेवित मार्ग में जा पहुँचोगे ॥१॥

योहि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥२॥

**पदच्छेद:**—यः, हि, तेजः, यथाशक्ति, न, दर्शयति, विक्रमात्, क्षत्रियः जीविताकाङ्क्षी, स्तेनः, इति, एव, तम्, विदुः ।

**अन्वय:**—हि, यः, क्षत्रियः, विक्रमात्, यथाशक्ति, तेजः, न, दर्शयति, तम्, जीविताकाङ्क्षी, स्तेनः, इति, एव, विदुः ।

**व्याख्या**—हि ( यतः ) यः क्षत्रियः ( क्षत्रियकुलोत्पन्नः ) विक्रमात् ( पराक्रमात् ) यथाशक्ति ( शक्त्यनुकूलम् ) तेजः ( पराक्रमम् ) न, दर्शयति ( प्रदर्शयति ) तम् ( क्षत्रियम् ) जीविताकाङ्क्षी ( जीवनेच्छुः ) स्तेनः ( चौरः ) इति एव ( एतावदेव ) विदुः ( अज्ञासिषुः )

**व्युत्पत्ति:**—शक्तिमनतिक्रम्य यथाशक्ति, अव्ययीभावः । जीवितम् आकाङ्क्षति इति जीविताकाङ्क्षी, तत्पुरुषः ।

**भावार्थ:**—जो क्षत्रिय अपने प्राण बचाने की इच्छा से यथाशक्ति पराक्रम करके अपना तेज नहीं दिखलाता उसे विद्वान् लोग चोर समझते हैं ॥२॥

अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ३ ॥

**पदच्छेद:**—अर्थवन्ति, उपपन्नानि, वाक्यानि, गुणवन्ति, च, न, एव, सम्प्राप्नुवन्ति, त्वाम्, मुमूर्षुम्, इव, भेषजम् ।

**अन्वय:**—अर्थवन्ति, उपपन्नानि, गुणवन्ति, च, वाक्यानि, भेषजम्, मुमूर्षुम्, इव, त्वाम्, न, एव, सम्प्राप्नुवन्ति ।

**व्याख्या**—अर्थवन्ति ( सार्थकानि ) उपपन्नानि ( युक्तानि ) गुणवन्ति ( गुणान्वितानि ) च वाक्यानि ( वचांसि ) भेषजम् ( औषधम् ) मुमूर्षुम् ( मरणेच्छुम् ) इव ( यथा ) त्वाम् ( सञ्जयम् ) न एव ( खलु ) सम्प्राप्नुवन्ति ( समधिगच्छन्ति )

**व्युत्पत्तिः** – अर्थः अस्ति एषामित्यर्थवन्ति । मर्तुमिच्छति मुमूर्षति इति मुमूर्षुः तम् ।

**भावार्थ:**—जैसे मरने के लिए सन्नद्ध प्राणी को उत्तम से उत्तम औषध गुणकारी नहीं होती वैसे ही नीति तथा गुणों से पूर्ण मेरे वाक्य भी तुझे अच्छे नहीं लग रहे हैं ॥३॥

सन्ति वै सिन्धुराजस्य सन्तुष्टा न तथा जनाः ।
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ॥४॥

पदच्छेदः—सन्ति, वै, सिन्धुराजस्य, सन्तुष्टाः, न, तथा, जनाः, दौर्बल्यात्, आसते, मूढाः, व्यसनौघप्रतीक्षिणः ।

अन्वयः—वै, सिन्धुराजस्य, तथा, जनाः, सन्तुष्टाः, न, सन्ति ( किन्तु ) दौर्बल्यात्, मूढाः, व्यसनौघप्रतीक्षिणः, आसते ।

व्याख्या—वै ( निश्चयेन ) सिन्धुराजस्य ( सिन्धुदेशाधीशस्य ) तथा ( तेन प्रकारेण ) जनाः ( प्रजाः ) सन्तुष्टाः ( अनुकूलाः ) न, सन्ति ( वर्तन्ते ) किन्तु दौर्बल्यात् ( दुर्बलत्वेन ) मूढाः ( अकर्मपराः ) व्यसनौघप्रतीक्षिणः ( व्यसनसमूह-प्रतीक्षापराः ) आसते ( तिष्ठन्ति ) ।

व्युत्पत्तिः—सिन्धूनां राजा सिन्धुराजः, षष्ठीतत्पुरुषः । दुर्बलस्य भावः दौर्बल्यम्, तस्मात् । व्यसनानाम् ओघाः व्यसनौघाः तान् प्रतीक्षन्ते इति व्यसनौघ-प्रतीक्षिणः, तत्पुरुषः ।

भावार्थः—यह बात निश्चित है कि सिन्धुदेश की प्रजा सिन्धुराज से उतनी सन्तुष्ट नहीं है जितनी तुम से रहा करती थी । किन्तु वह दुर्बलता तथा मुक्ति के मार्ग न जानने के कारण चुपचाप इस बात की प्रतीक्षा में है कि देखें राजा कब किसी दुःख में पड़ता है । उस समय हम लोग भी बदला ले लेंगे ॥४॥

सहायोपचितिं कृत्वा व्यवसाय्य ततस्ततः ।
अनुदुष्येयुरपरेऽपश्यन्तस्तव पौरुषम् ॥ ५ ॥

पदच्छेदः—सहायोपचितिम्, कृत्वा, व्यवसाय्य, ततः, ततः, अनुदुष्येयुः, अपरे, अपश्यन्तः, तव, पौरुषम् ।

अन्वयः—अपरे, तव, पौरुषम्, अपश्यन्तः, सहायोपचितिम्, कृत्वा, ततः, ततः, व्यवसाय्य, अनुदुष्येयुः ।

व्याख्या—अपरे ( स्वकीयाः जनाः ) तव ( त्वदीयम् ) पौरुषम् ( पुरुषार्थम् ) अपश्यन्तः ( अवलोकयन्तः ) सहायोपचितिम् ( सहायसम्पत्तिम् ) कृत्वा ( विधाय ) अपि, ततः ततः ( विभिन्नैः ) प्रकारैः व्यवसाय्य ( व्यवसायं कृत्वा ) अनुदुष्येयुः ( शत्रुपक्षमाश्रयेयुः ) ।

व्युत्पत्तिः—सहायस्य उपचितिः ताम्, ष.तत्पु. । व्यवसाययित्वेति व्यवसाय्य ।

भावार्थः—जो तुम्हारे भी आत्मीयजन हैं वे भी तुम्हारा पुरुषार्थ गिरा देख अपने यत्नों को निष्फल समझ धीरे धीरे शत्रुपक्ष की ओर हो जायँगे ॥५॥

तैः कृत्वा सह सङ्घातं गिरिदुर्गालयं चर ।
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ६ ॥

**पदच्छेदः**—तैः, कृत्वा, सह, सङ्घातम्, गिरिदुर्गालयम्, चर, काले, व्यसनम्, आकाङ्क्षन्, न, एव, अयम्, अजरामरः ।

**अन्वयः**- तैः, सह, सङ्घातम्, कृत्वा, काले, व्यसनम्, आकाङ्क्षन्, गिरिदुर्गालयम्, चर, अयम्, अजरामरः, न, एव ।

**व्याख्या**—तैः ( स्वकीयैः जनैः ) सह ( साकम् ) सङ्घातम् ( सङ्घटनम् ) कृत्वा ( विधाय ) काले ( समये ) व्यसनम् ( शत्रुव्यसनम् ) आकाङ्क्षन् ( प्रतीक्षमाणः ) गिरिदुर्गालयम् ( गुप्तपार्वतनिवासम् ) चर (सम्पादय) अयम् ( तव शत्रुः) अजरामरः (जरामृत्युरहितः) न एव ( नैवाऽस्ति ) किन्तु समये जीर्णः मरिष्यति ।

**व्युत्पत्तिः**—दुर्गः एव आलयः दुर्गालयः, गिरिषु दुर्गालयः तम् (तत्पुरुषः) ।

**भावार्थः**—इसलिए तू आत्मीय वर्ग के साथ किसी पहाड़ी किले में निवास करता हुआ इस बात की प्रतीक्षा कर कि तुम्हारा शत्रु किस समय दुःख में पड़ता है । यह सिन्धुराज कोई अजर अमर तो है नहीं ॥६॥

सञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥७॥

**पदच्छेदः**—सञ्जयः, नामतः, च, त्वम्, न, च, पश्यामि, तत्, त्वयि; अन्वर्थनामा, भव, मे, पुत्र ! मा, व्यर्थनामकः ।

**अन्वयः**—हे मे पुत्र ! त्वम्, च, नामतः, सञ्जयः, तत्, च, त्वयि, न, पश्यामि, अन्वर्थनामा, भव, व्यर्थनामकः, मा ( भव ) ।

**व्याख्या**—हे मे पुत्र ( हे मम सुत ! ) त्वम् च नामतः ( नाम्ना ) सञ्जयः ( सञ्जयाख्यः ) तत् च ( नामानुगुणं कर्म च ) त्वयि ( सञ्जये ) न पश्यामि ( नावलोकयामि ) अतः अन्वर्थनामा ( नामानुकूलार्थवान् जयनशीलः ) भव ( सम्पद्यस्व ) व्यर्थनामकः ( निरर्थकनामा ) मा ( न ) भवेति शेषः ।

**व्युत्पत्तिः**— सञ्जयतीति सञ्जयः । अर्थमनु अन्वर्थम् नाम यस्य सः अन्वर्थनामा ( बहुव्रीहिः ) । व्यर्थं नाम यस्य स व्यर्थनामकः ( बहुव्रीहिः ) । अमानोनाप्रतिषेधे इति माशब्दः निषेधार्थः ।

**भावार्थः**—हे पुत्र ! नाम तो तुम्हारा सञ्जय है किन्तु काम वैसा नहीं है । अतः तुम अपने नामको सार्थक बनाओ, व्यर्थ न करो ॥७॥

सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत् ।
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥८॥

**पदच्छेदः**—सम्यग् दृष्टिः, महाप्राज्ञः, बालम्, त्वाम्, ब्राह्मणः, अब्रवीत्, अयम्, प्राप्य, महत्, कृच्छ्रम्, पुनः, वृद्धिम्, गमिष्यति ।

अन्वयः—सम्यग्दृष्टिः, महाप्राज्ञः, ब्राह्मणः, बालम्, त्वाम्, अब्रवीत्, अयम्, महत्, कृच्छ्रम्, प्राप्य, पुनः, वृद्धिम्, गमिष्यति ।

व्याख्या—सम्यग्दृष्टिः ( दूरदर्शी ) महाप्राज्ञः ( महापण्डितः ) ब्राह्मणः ( द्विजः दैवज्ञः ) बालम् ( पुत्रम् ) त्वाम् ( दृष्ट्वा ) अब्रवीत् ( अकथयत् ) यत् अयम् ( एषः ) महत् ( अधिकम् ) कृच्छ्रम् ( दुःखम् ) प्राप्य ( अधिगम्य ) पुनः ( भूयः ) वृद्धिम् ( उन्नतिम् ) गमिष्यति ( लप्स्यते ) ।

व्युत्पत्तिः—प्रज्ञ एव प्राज्ञः ( प्रज्ञादिभ्योऽण् ) महान् प्राज्ञः महाप्राज्ञः । प्र + आप् + क्त्वा ( ल्यप् ) ।

भावार्थः—एक बड़े ही विद्वान् ज्यौतिषी ब्राह्मण ने बचपन में तुझे देखकर कहा था कि यह बालक एक बार कष्ट पाकर फिर वृद्धि प्राप्त करेगा ॥८॥

तस्य स्मरन्ती वचनमाशंसे विजयं तव ।
तस्मात्तात ! ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥९॥

पदच्छेदः—तस्य, स्मरन्ती, वचनम्, आशंसे, विजयम्, तव, तस्मात्, तात ! ब्रवीमि, त्वाम्, वक्ष्यामि, च, पुनः, पुनः ।

अन्वयः—हे तात ! तस्य, वचनम्, स्मरन्ती, तव, विजयम्, आशंसे, तस्मात्, त्वाम्, ब्रवीमि, पुनः, पुनः, च, वक्ष्यामि ।

व्याख्या—हे तात ! ( हे पुत्र ! ) तस्य ( ब्राह्मणस्य ) वचनम् ( वाक्यम् ) स्मरन्ती ( ध्यायन्ती ) तव ( त्वदीयम् ) विजयम् ( जयम् ) आशंसे ( इच्छामि ) तस्मात् ( ततः कारणात् ) त्वाम् ( सञ्जयम् ) ब्रवीमि ( वदामि ) पुनः पुनः ( भूयोभूयः ) च वक्ष्यामि ( कथयिष्यामि )

व्युत्पत्तिः—स्मृ + शतृ + ङीप् । आङः शासु इच्छायाम् ।

भावार्थः—मैं उस ब्राह्मण की बात ध्यान में रखती हुई विजय की आशा करती हूँ । अत एव बार बार तुम्हें उस कार्य के लिए प्रेरणा करती हूँ ॥९॥

यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥१०॥

पदच्छेदः—यस्य, हि, अर्थाभिनिर्वृत्तौ, भवन्ति, आप्यायिताः, परे, तस्य, अर्थसिद्धिः, नियता, नयेषु, अर्थानुसारिणः ।

अन्वयः—हि यस्य, अर्थाभिनिर्वृत्तौ, परे, आप्यायिताः, भवन्ति, नयेषु, अर्थानुसारिणः, तस्य, अर्थसिद्धिः, नियता ।

व्याख्या—हि ( यतः ) यस्य ( पुरुषस्य ) अर्थाभिनिर्वृत्तौ ( प्रयोजननिष्पत्तौ ) परे ( तत्सम्बन्धिनः ) आप्यायिताः ( पोषिताः ) भवन्ति ( जायन्ते )

नयेषु ( नीतिमार्गेषु ) अर्थानुसारिणः ( अर्थानुगामिनः ) तस्य ( पुरुषविशेषस्य ) अर्थसिद्धिः ( प्रयोजनसिद्धिः ) नियता ( निश्चिता ) ।

व्युत्पत्तिः—अर्थानाम् अभिनिर्वृत्तिः तस्याम् (ष. तत्पु.) आङ् पूर्वकात् प्यायी वृद्धौ धातोः क्ते । अर्थमनुसरतीति अर्थानुसारी तस्य । अर्थानां सिद्धिः अर्थसिद्धिः ।

भावार्थः—जिस मनुष्य की प्रयोजनसिद्धि से अन्य आत्मीयों की भी उन्नति हो नीतिमार्ग पर उचित रूप से चलनेवाले उस व्यक्ति की सिद्धियाँ अवश्य होती हैं ॥१०॥

समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ! ।
एवं विद्वान्युद्धमना भव मा प्रत्युपाहरः ॥११॥

पदच्छेदः—समृद्धिः, असमृद्धिः, वा, पूर्वेषाम्, मम, सञ्जय, एवम्, विद्वान्, युद्धमनाः, भव, मा, प्रत्युपाहरः ।

अन्वयः—हे सञ्जय ! मम, पूर्वेषाम्, वा, समृद्धिः, असमृद्धिः, एवम्, विद्वान्, युद्धमनाः, भव, मा प्रत्युपाहरः ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) मम ( स्वस्य ) पूर्वेषाम् ( राज्ञाम् ) वा समृद्धिः ( अभ्युदयः ) असमृद्धिः ( हानिः ) अवश्यं भाविनी इति एवम् ( अमुना प्रकारेण ) विद्वान् ( जानानः ) युद्धमनाः ( संग्रामचेताः ) भव ( जायस्व ) मा प्रत्युपाहरः ( मा युद्धमुपसंहर ) लाभालाभौ समौ कृत्वा युद्धयस्वेति यावत् ।

व्युत्पत्तिः—न समृद्धिः असमृद्धिः (नञ्तत्पुरुषः) विद्-शतृ (विदेःशतुर्वसुः) युद्धे मनो यस्य सः युद्धमनाः ( व्यधिकरणो बहुब्रीहिः )

भावार्थः—हे सञ्जय ! युद्ध करने से मुझे या मेरे पुरखों को लाभ या हानि होती ही है ऐसा समझ कर युद्ध के लिए तैयार हो जा, युद्ध का विचार न छोड़ ॥११॥

नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥१२॥

पदच्छेदः—न, अतः, पापीयसीम्, काञ्चित्, अवस्थाम्, शम्बरः, अब्रवीत्, यत्र, न, एव, अद्य, न, प्रातः, भोजनम्, प्रतिदृश्यते ।

अन्वयः—शम्बरः, अतः, पापीयसीम्, काञ्चित्, अवस्थाम्, न, अब्रवीत्, यत्र, अद्य, नैव, प्रातः ( च ) भोजनम्, न, प्रतिदृश्यते ।

व्याख्या—शम्बरः ( तन्नामकः मुनिविशेषः ) अतः ( अस्याः पराम् ) पापीयसीम् ( अधिकपापाम् ) अवस्थाम् ( दशाम् ) न, अब्रवीत् ( उवाच ) यत्र ( दशायाम् ) न एव-अद्य ( इदानीम् ) न प्रातः (प्रभाते) च भोजनम् ( अशनम् ) न प्रतिदृश्यते ( अवलोक्यते ) ।

व्युत्पत्तिः—अतिशयेन पापा इति पापीयसी ताम् पापीयसीम् ।

भावार्थः—शम्बर मुनि ने कहा है कि जिस दशा में आज प्रातःकाल के लिए ही भोजन नहीं, कल क्या होगा ? ऐसी चिन्ता बनी रहती है उससे बढ़ कर पापमयी अवस्था दूसरी नहीं होती ॥१२॥

पतिपुत्रवधादेतत् परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥१३॥

पदच्छेदः—पतिपुत्रवधात्, एतत्, परमम्, दुःखम्, अब्रवीत्, दारिद्र्यम्, इति, यत्, प्रोक्तम्, पर्यायमरणम्, हि, तत् ।

अन्वयः—एतत्, पतिपुत्रवधात्, अपि, परमम्, दुःखम्, अब्रवीत्, हि, दारिद्र्यम्, इति, यत् प्रोक्तम्, तत्, पर्यायमरणम् ।

व्याख्या—एतत् ( इदम् ) पतिपुत्रवधात् ( पतिपुत्रनाशात् ) अपि परमम् ( अधिकम् ) दुःखम् ( कष्टम् ) अब्रवीत् ( अगादीत् ) हि ( यतः ) दारिद्र्यम् ( दरिद्रता ) इति यत् प्रोक्तम् ( कथितम् ) तत् ( दारिद्र्यम् ) पर्यायमरणम् ( मरणपर्य्यायः ) अस्तीति शेषः ।

व्युत्पत्तिः—पतिश्च पुत्रश्च पतिपुत्रौ ( इतरेतरयोगद्वन्द्वः ) पतिपुत्रयोः वधः तस्मात् ( ष० तत्पु० ) दरिद्रस्य भावः दारिद्र्यम् । पर्यायेण मरणम् पर्यायमरणम् ( तृ० तत्पु० )

भावार्थः—दरिद्रता का दुःख पतिपुत्र के मरण से भी अधिक कहा गया है । अधिक क्या मरण का दूसरा नाम ही दरिद्रता है ॥१३॥

अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥१४॥

पदच्छेदः—अहम्, महाकुले, जाता, ह्रदात्, ह्रदम्, इव, आगता, ईश्वरी, सर्वकल्याणी, भर्त्रा, परमपूजिता ।

अन्वयः—महाकुले, जाता, ह्रदात्, ह्रदम्, इव, आगता, ईश्वरी, सर्वकल्याणी, अहम्, भर्त्रा, परमपूजिता ।

व्याख्या—महाकुले ( उत्तमक्षत्रियकुले ) जाता ( उत्पन्ना ) ह्रदात् ( एकस्मात् जलाशयात् ) ह्रदम् ( अपर जलाशयम् ) इव ( यथा ) आगता ( समायाता ) ईश्वरी ( समर्था ) सर्वकल्याणी ( सकलकल्याणवती ) अहम् ( विदुला ) भर्त्रा ( स्वपतिना ) परमपूजिता ( अत्यन्तमादृता ) ।

व्युत्पत्तिः—महत् कुलम् महाकुलम् ( कर्मधारयः ) । सर्वाणि कल्याणानि यस्याः सा सर्वकल्याणी ( बहु. ) । परमा पूजिता ( कर्मधारयः ) ।

**भावार्थः**—मैं बड़े क्षत्रिय कुल में उत्पन्न होकर जैसे कमलिनी एक सरोवर से दूसरे में जाती है वैसे ही उत्तम कुल में व्याही गई। समर्थ तथा समस्त सुखों की पात्र थी तथा मेरे पतिदेव मेरा बड़ा आदर करते थे ॥१४॥

महार्हमाल्याभरणां सुमृष्टाम्बरवाससम्।
पुरा हृष्टः सुहृद्वर्गो मामपश्यत् सुहृद्गताम् ॥१५॥

**पदच्छेदः**—महार्हमाल्याभरणाम्, सुमृष्टाम्बरवाससम्, पुरा, हृष्टः, सुहृद्वर्गः, माम्, अपश्यत्, सुहृद्गताम्।

**अन्वयः**—पुरा, हृष्टः, सुहृद्वर्गः, महार्हमाल्याभरणाम्, सुमृष्टाम्बरवाससम्, सुहृद्गताम्, माम्, अपश्यत्।

**व्याख्या**—पुरा ( पूर्वकाले ) हृष्टः ( प्रसन्नः ) सुहृद्वर्गः ( मित्रवर्गः ) महार्हमाल्याभरणाम् ( अमूल्यमालाभूषणाम् ) सुमृष्टाम्बरवाससम् ( दिव्यवस्त्रवतीम् ) सुहृद्गताम् ( सखीमण्डलस्थाम् ) माम् ( विदुलाम् ) अपश्यत् ( अवालोकयत् )

**व्युत्पत्तिः**—सु हृदयं येषां ते सुहृदः ( बहुव्री० ) सुहृदां वर्गः ( ष. तत्पु. ) महार्हम् माल्यम् आभरणं च यस्याः ताम्। सुमृष्टाम्बरम् इव वासांसि यस्याः ताम् ( बहुव्री० ) सुहृद्भिः गता ताम् ( तृ. तत्पु. )।

**भावार्थः**—पहले मैं सुन्दर, कीमती, फूलों के हार तथा दिव्य वस्त्रों, आभूषणों को पहनती थी, सखीवर्ग हमें देखकर अत्यन्त आनन्दित होता था ॥१५॥

यदा मां चैव भार्यां च द्रष्टाऽसि भृशदुर्बलाम्।
न तदा जीवितेनार्थो भविता तव सञ्जय ! ॥१६॥

**पदच्छेदः**—यदा, माम्, च, एव, भार्याम्, च, द्रष्टा, असि, भृशदुर्बलाम्, न, तदा, जीवितेन, अर्थः, भविता, तव, सञ्जय ! ।

**अन्वयः**—हे सञ्जय ! यदा, माम्, च, एव, भार्याम्, च, भृशदुर्बलाम्, द्रष्टा, असि, तदा, तव, जीवितेन, अर्थः, न, भविता।

**व्याख्या**—हे सञ्जय ! ( हे पुत्र ) यदा ( यस्मिन् काले ) माम् ( विदुलाम् ) च, एव भार्याम् ( स्वपत्नीम् ) च भृशदुर्बलाम् ( अत्यन्तदुर्बलाम् ) द्रष्टा ( द्रक्ष्यते ) असि, तदा ( तदानीम् ) तव ( सञ्जयस्य ) जीवितेन ( जीवनेन ) अर्थः ( प्रयोजनम् ) न भविता ( भविष्यति )

**व्युत्पत्तिः**—भृशं दुर्बला भृशदुर्बला ताम्।

**भावार्थः**—हे सञ्जय ! जिस समय तू मुझे तथा अपनी स्त्री को अत्यन्त दुर्बल देखेगा तब क्या तुम्हारा चित्त जीना चाहेगा ? ॥१६॥

दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते? ॥१७॥

पदच्छेदः—दासकर्मकरान्, भृत्यान्, आचार्यर्त्विक्पुरोहितान्, अवृत्त्या, अस्मान्, प्रजहतः, दृष्ट्वा, किम्, जीवितेन, ते ।

अन्वयः—दासकर्मकरान्, भृत्यान्, आचार्यर्त्विक्पुरोहितान्, अवृत्त्या, अस्मान्, प्रजहतः, दृष्ट्वा, ते, जीवितेन, किम् ?

व्याख्या—दासकर्मकरान् ( सेवाकर्मपरायणान् ) भृत्यान् ( सेवकान् ) आचार्यर्त्विक्पुरोहितान् ( गुरुयाज्ञिकपुरोधसः ) अवृत्त्या ( जीविकाभावेन ) अस्मान् ( नः ) प्रजहतः ( त्यजतः ) दृष्ट्वा ( अवलोच्य ) ते ( तव ) जीवितेन ( जीवनेन ) किम् ( किम् प्रयोजनम् ) न किमपि इत्यर्थः ।

व्युत्पत्तिः—कर्माणि कुर्वन्ति इति कर्मकराः दासाश्च कर्मकराः च तान् । आचार्यश्च ऋत्विजश्च पुरोहितश्चेति आचार्यर्त्विक्पुरोहिताः तान् ( इतरेतरयोगो द्वन्द्वः ) ।

भावार्थः—दास, कामकाज करनेवाले, सेवक, आचार्य, याज्ञिक तथा पुरोहित लोग जीविका न रहने के कारण जब हम लोगों को छोड़ २ कर अलग जाने लगेंगे ऐसी दशा में क्या तुम्हारा जीवन सार्थक होगा ? ॥ १७ ॥

यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥१८॥

पदच्छेदः—यदि, कृत्यम्, न, पश्यामि, तव, अद्य, अहम्, यथा, पुरा, श्लाघनीयम्, यशस्यम्, च, का, शान्तिः, हृदयस्य, मे ।

अन्वयः—अद्य, यथा, पुरा, श्लाघनीयम्, यशस्यम्, च, तव, कृत्यम् ( तथा ) यदि, न, पश्यामि, ( ततः ) मे, हृदयस्य, का शान्तिः ?

व्याख्या—अद्य ( इदानीम् ) यथा पुरा ( पूर्वकाले ) श्लाघनीयम् ( प्रशंसनीयम् ) यशस्यम् ( कीर्त्तिकरम् ) च तव ( त्वदीयम् ) कृत्यम् ( कर्त्तव्यम्, पराक्रमम् ) तथा यदि ( इदानीम् ) न पश्यामि ( अवलोकये ) तदा मे ( मम ) हृदयस्य ( चेतसः ) का शान्तिः ( शमः ) कथमपि शान्तिर्न सम्भवतीति भावः ।

व्युत्पत्तिः—यशसे हितम् यशस्यम्, यशस् + यत् । कृ + यत् कृत्यम् ।

भावार्थः—तुमने पहले जैसे प्रशंसनीय पराक्रम के कार्य किए थे यदि आज उस तरह के कार्य तुम्हारे न देखूँ तो मेरे हृदय को शान्ति किस तरह प्राप्त होगी ? ॥ १८ ॥

नेति चेद्ब्राह्मणं ब्रूयां दीर्येत हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥१९॥

पदच्छेदः—न, इति, चेत्, ब्राह्मणम्, ब्रूयाम्, दीर्येत, हृदयम्, मम, न, हि, अहम्, न, च, मे, भर्ता, न, इति, ब्राह्मणम्, उक्तवान्।

अन्वयः—चेत्, ब्राह्मणम्, न, इति, ब्रूयाम्, मम, हृदयम्, दीर्येत, हि, अहम्, न, मे, भर्ता, च, ब्राह्मणम्, न, इति, न, उक्तवान्।

व्याख्या—चेत् ( यदि ) ब्राह्मणम् ( द्विजम् ) न इति ( नास्ति इति ) ब्रूयाम्, ( जल्पेयम् ) तदा मम ( विदुलायाः ) हृदयम् ( अन्तःकरणम् ) दीर्येत ( विदीर्येत ) हि ( यतः ) अहम् ( विदुला ) न, मे ( मम ) भर्ता ( पतिः ) च न इति ( नास्ति इति ) ब्राह्मणम् ( द्विजम् ) न, उक्तवान् ( गदितवान् )

व्युत्पत्तिः—दृ विदारणे इति धातोः कर्मणि विधि लिङ् दीर्येत। भर्ता भृधातोः तृचि भर्तृशब्दस्य रूपम्।

भावार्थः—अरे नालायक पुत्र! आज से पूर्व मैंने तथा मेरे पति ने किसी भी ब्राह्मण आदि याचक को किसी भी वस्तु के लिए "मेरे पास नहीं है" ऐसा नहीं कहा है। आज अगर कहना पड़ेगा तो मेरा हृदय फट जायगा ॥१९॥

वयमाश्रयणीयाः स्म न श्रोतारः परस्य च।
साऽन्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥२०॥

पदच्छेदः—वयम्, आश्रयणीयाः, स्म, न, श्रोतारः, परस्य, च, सा, अन्यम्, आसाद्य, जीवन्ती, परित्यक्ष्यामि, जीवितम्।

अन्वयः—वयम्, आश्रयणीयाः, स्म, परस्य, च, श्रोतारः, न, सा ( अहम् ) जीवन्ती, अन्यम्, आसाद्य, जीवितम्, परित्यक्ष्यामि।

व्याख्या—वयम् ( सर्वे ) आश्रयणीयाः ( आश्रयितव्याः ) स्म, परस्य ( अन्यस्य च ) श्रोतारः ( पराज्ञायाः ) न। सा ( सैवाहम् ) जीवन्ती ( अमृता ) अन्यम् ( परम् ) आसाद्य ( आश्रित्य ) जीवितम् ( जीवनम् ) परित्यक्ष्यामि ( हास्यामि ) प्राणान् त्यक्ष्यामीत्यर्थः।

व्युत्पत्तिः— आ + श्रि + अनीयर् ( आश्रयणीयाः ) परि + त्यज् + लृट् ( परित्यक्ष्यामि )।

भावार्थः—यह तुम्हारा वंश दूसरों को आश्रय देने वाला है, अगर आज तुम्हारी इस दशा के कारण दूसरे के आश्रय में हमें जाना पड़ा तो मर ही जाऊँगी। क्योंकि ऐसी अपमानित अवस्था में जीना अच्छा न होगा ॥२०॥

अपारे भव नः पारमप्लवे भव नः प्लवः।
कुरुष्व स्थानमस्थाने मृतान् सञ्जीवयस्व नः ॥२१॥

पदच्छेदः—अपारे, भव, नः, पारम्, अप्लवे, भव, नः, प्लवः, कुरुष्व, स्थानम्, अस्थाने, मृतान्, सञ्जीवयस्व, नः।

अन्वयः—नः, अपारे, पारम्, भव, नः, अप्लवे, प्लवः, भव, अस्थाने, स्थानम्, कुरुष्व, मृतान्, नः, सञ्जीवयस्व।

व्याख्या—नः (अस्माकम्) अपारे (अगाधे) पारम् (पारयिता) भव (सम्पद्यस्व) नः (अस्माकम्) अप्लवे (अनौके भवसागरे) प्लवः (नौकारूपः) भव, अस्थाने (महादुःखे) स्थानम् (साहसम्) कुरुष्व (विधत्स्व) मृतान् (गतासून्) नः (अस्मान्) सञ्जीवयस्व (अनुप्राणय)।

व्युत्पत्तिः—नास्ति पारः यस्मिन् इति अपारः तस्मिन्। न प्लवः यस्मिन् सः अप्लवः तस्मिन्। नास्ति स्थानम् यस्मिन् तस्मिन्।

भावार्थः—हे पुत्र! तुम हमे अपार दुःख में पार लगानेवाले बनो, नौका-रहित दुःखसागर में नौकारूप बनो, तुम्हें अगर इस कार्य में दुःख भी सहना पड़े तो भी तू उसे सहन कर मरे हुए के समान हम जैसों को जीवन प्रदान कर ॥२१॥

सर्वे ते शत्रवः शक्या न चेज्जीवितुमर्हसि।
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥२२॥

पदच्छेदः—सर्वे, ते, शत्रवः, शक्याः, न, चेत्, जीवितुम्, अर्हसि, अथ, चेत्, ईदृशीम्, वृत्तिम्, क्लीबाम्, अभ्युपपद्यसे।

अन्वयः—जीवितुम्, न, अर्हसि, चेत्, ते, सर्वे, शत्रवः, शक्याः, अथ, चेत्, ईदृशीम्, क्लीबाम्, वृत्तिम्, अभ्युपपद्यसे।

व्याख्या—जीवितुम् (प्राणान् धारयितुम्) न अर्हसि (इच्छसि) चेत् (यदि) ते (तव) सर्वे (निखिलाः) शत्रवः (वैरिणः) शक्याः (जेतुम् शक्याः) अथ (अनन्तरम्) चेत् (यदि) ईदृशीम् (एतादृशीम्) क्लीबाम् (नपुंसकाम्) वृत्तिम् (वर्त्तनम्) अभ्युपपद्यसे (अङ्गीकुरुषे)

व्युत्पत्तिः—शकधातोः अर्हेकृत्यतृचः।

भावार्थः—अगर तू अपने प्राण का मोह न करे तो सब शत्रुओं को मार सकता है। अगर इस तरह नपुंसकों वाली कातर वृत्ति को धारण कर रहे हो तो······॥२२॥

निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम्।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥२३॥

पदच्छेदः—निर्विण्णात्मा, हतमनाः, मुञ्च, एताम्, पापजीविकाम्, एकशत्रु-वधेन, एव, शूरः, गच्छति, विश्रुतिम्।

अन्वयः—निर्विण्णात्मा, हतमनाः, एताम्, पापजीविकाम्, मुञ्च, शूरः, एकशत्रुवधेन, एव, विश्रुतिम्, गच्छति।

व्याख्या—निर्विण्णात्मा ( विरक्तचित्तः ) हतमनाः ( नष्टसङ्कल्पः ) एताम् ( इमाम् ) पापजीविकाम् ( पापजीवनम् ) मुञ्च ( त्यज ) शूरः ( वीरः ) एकशत्रुवधेन ( एकशत्रुमारणेन ) एव ( अपि ) विश्रुतिम् ( ख्यातिम् ) गच्छति ( प्राप्नोति )।

व्युत्पत्तिः—निर्विण्ण आत्मा यस्य सः ( बहुव्री० ) निर् + विद् + त ( निर्विण्णस्योपसंख्यानम् ), हतम् मनः यस्य सः। पापमस्ति अस्यां सा पापा सा जीविका ताम् ( कर्मधा० )। एकः शत्रुः तस्य वधः तेन ( तत्पु० )।

भावार्थः—विरक्त चित्त तथा नष्टसङ्कल्प बन कर इस पापजीवन को ही छोड़ दे। क्योंकि शूर वीर तो एक शत्रु के मारने से भी जगत् में प्रसिद्ध हो जाता है ॥२३॥

इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत।
माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत् ॥२४॥

पदच्छेदः—इन्द्रः, वृत्रवधेन, एव, महेन्द्रः, समपद्यत, माहेन्द्रम्, च, गृहम्, लेभे, लोकानाम्, च, ईश्वरः, अभवत्।

अन्वयः—इन्द्रः, वृत्रवधेन, एव, महेन्द्रः, समपद्यत, माहेन्द्रम्, गृहम्, च, लेभे, लोकानाम्, ईश्वरः, च, अभवत्।

व्याख्या—इन्द्रः ( शक्रः ) वृत्रवधेन ( वृत्रासुरवधेन ) एव ( अपि ) महेन्द्रः ( तन्नामा ) समपद्यत ( समजायत ) माहेन्द्रम् ( महेन्द्रसम्बन्धि ) गृहम् ( अमरावतीदर्शनीयम् ) च लेभे ( अवाप्तवान् ) लोकानाम् ( भुवनानाम् ) ईश्वरः ( स्वामी ) च अभवत् ( अजायत )

व्युत्पत्तिः—वृत्रस्य वधस्तेन ( तत्पु० )। महान् इन्द्रः महेन्द्रः ( कर्मधा० ) महेन्द्रस्य इदं माहेन्द्रम् महेन्द्रशब्दात् अण्। ईष्टे इति ईश्वरः ( ईश् + वरच् )

भावार्थः—केवल वृत्रासुर को मार देने से ही इन्द्र का नाम महेन्द्र हो गया, अमरावती का निवास प्राप्त कर वे समस्त भुवनों के स्वामी बन गये ॥२४॥

नाम विश्राव्य वै संख्ये शत्रूनाहूय दंशितान्।
सेनाग्रं चापि विद्राव्य हत्वा वा पुरुषं वरम् ॥२५॥

पदच्छेदः—नाम, विश्राव्य, वै, संख्ये, शत्रून्, आहूय, दंशितान्, सेनाग्रम्, च, अपि, विद्राव्य, हत्वा, वा, पुरुषम्, वरम्।

अन्वयः—संख्ये, नाम, विश्राव्य दंशितान्, शत्रून्, आहूय, सेनाग्रम्, च, अपि, विद्राव्य, वरम्, पुरुषम्, वा, हत्वा।

**व्याख्या**—संख्ये ( युद्धे ) नाम ( स्वाभिधेयम् ) विश्राव्य ( श्रावयित्वा ) दर्शितान् शत्रून् ( वैरिणः ) आहूय ( प्रोत्साह्य ) सेनाग्रम् ( सेनामुखम् ) च अपि विद्राव्य ( विस्फोर्य ) वरम् ( श्रेष्ठम् नायकमित्यर्थः ) पुरुषम् ( जनम् ) वा हत्वा ( मारयित्वा ) यदैव महद् यशः लभते इत्युत्तरेणान्वयः ।

**व्युत्पत्तिः**—सेनाया अग्रम् सेनाग्रम् ( षष्ठीतत्पुरुषः )

**भावार्थः**—युद्ध में अपना नाम सुनाकर शत्रुओं को पुकारते हुये शत्रु सेना के अगले हिस्से को तितर-बितर कर अथवा सेनानायक को मारकर······॥२५॥

**यदैव लभते वीरः सुयुद्धेन महद्यशः ।**
**तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥२६॥**

**पदच्छेदः**—यदा, एव, लभते, वीरः, सुयुद्धेन, महत्, यशः, तदा, एव, प्रव्यथन्ते, अस्य, शत्रवः, विनमन्ति, च ।

**अन्वयः**—यदा, एव, वीरः, सुयुद्धेन, महत्, यशः, लभते, तदा, एव, अस्य, शत्रवः, प्रव्यथन्ते, विनमन्ति च ।

**व्याख्या**—यदा ( यस्मिन् काले ) एव वीरः ( वीरपुरुषः ) सुयुद्धेन ( उत्तमसंगरेण ) महत् ( उत्तमम् ) यशः ( कीर्त्तिम् ) लभते ( प्राप्नुते ) तदा एव ( तस्मिन् एव काले ) अस्य ( विजयिनः ) शत्रवः ( अरयः ) प्रव्यथन्ते ( दुःखमासादयन्ति ) विनमन्ति ( शरणीभूय प्रणमन्ति च )

**व्युत्पत्तिः**—सुष्ठु युद्धं सुयुद्धं तेन ( कर्मधारयः )

**भावार्थः**—वीर पुरुष जिसी समय उत्तम युद्ध में विजय कर सुयश प्राप्त करता है उसी समय उसके शत्रु दुःखी होते तथा उसके शरण आकर प्रणाम करते हैं ।

**त्यक्त्वाऽऽत्मानं रणे दक्षं शूरं कापुरुषा जनाः ।**
**अवशास्तर्पयन्ति स्म सर्वकामसमृद्धिभिः ॥२७॥**

**पदच्छेदः**—त्यक्त्वा, आत्मानम्, रणे, दक्षम्, शूरम्, कापुरुषाः, जनाः, अवशाः, तर्पयन्ति, स्म, सर्वकामसमृद्धिभिः ।

**अन्वयः**—कापुरुषाः, जनाः, अवशाः, आत्मानम्, रणे, त्यक्त्वा, सर्वकामसमृद्धिभिः, दक्षम्, तर्पयन्ति स्म ।

**व्याख्या**—कापुरुषाः ( कातराः ) जनाः ( मनुष्याः ) अवशाः ( विवशाः ) आत्मानम् ( स्वम् ) रणे ( युद्धे ) त्यक्त्वा (परित्यज्य) सर्वकामसमृद्धिभिः ( निखिलैः धनादिप्रकारैः ) दक्षम् ( कुशलम् ) शूरम् ( वीरम् ) तर्पयन्ति स्म (प्रीणयन्ति स्म)

**व्युत्पत्तिः**—न वशः येषां ते अवशाः । सर्वे च ते कामाश्च समृद्धयश्च ताभिः ( इतरेतरयो. द्व. ) ।

भावार्थः—कायर लोग युद्ध में मर कर युद्धकुशल वीर पुरुष को सब प्रकार की कामनाओं तथा समृद्धियों से तृप्त करते हैं ॥२७॥

राज्यं चाप्युग्रविभ्रंशं संशयो जीवितस्य वा।
न लब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥२८॥

पदच्छेद:—राज्यम्, च, अपि, उग्रविभ्रंशम्, संशयः, जीवितस्य, वा, न, लब्धस्य, हि, शत्रोः, वै, शेषम्, कुर्वन्ति, साधवः।

अन्वयः—राज्यम, च, उग्रविभ्रंशम्, जीवितस्य, अपि, वा, संशयः, हि, साधवः, शत्रोः, शेषम्, न, कुर्वन्ति।

व्याख्या—राज्यम् ( राजशासनम् ) च उग्रविभ्रंशम् ( महाप्रपातम् ) जीवितस्य ( प्राणस्य ) अपि वा संशयः ( मरणम् ) हि ( यतः ) साधवः ( सद्वीराः ) शत्रोः ( जितस्य वैरिणः ) शेषम् ( किञ्चिद् दत्त्वा अवस्थापनम् ) न कुर्वन्ति ( विदधति )।

व्युत्पत्तिः—उग्रः विभ्रंशः यस्मिन् तत् ( बहु० व्री० )।

भावार्थः—राज्य का घोर नाश हो जाय, अथवा अपनी मृत्यु ही क्यों न आ जाय, पर सच्चे वीर अपने शत्रु को शेष नहीं रखते ॥२८॥

स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमम्।
रुद्धमेकायनं मत्वा पतोल्मुक इवारिषु ॥२९॥

पदच्छेद:—स्वर्गद्वारोपमम्, राज्यम्, अथवा, अपि, अमृतोपमम्, रुद्धम्, एकायनम्, मत्वा, पत, उल्मुकः, इव, अरिषु।

अन्वयः—स्वर्गद्वारोपमम्, अथवा, अमृतोपमम्, अपि, रुद्धम्, एकायनम्, राज्यम्, मत्वा, अरिषु, उल्मुकः, इव, पत।

व्याख्या—स्वर्गद्वारोपमम् ( स्वर्गद्वारसमानम् ) अथवा अपि अमृतोपमम्, ( अमृततुल्यम् ) अपि रुद्धम् ( निरुद्धम् ) एकायनम् ( एकमार्गम् ) राज्यम् ( राजसत्ताम् ) मत्वा ( विदित्वा ) अरिषु ( शत्रुषु ) उल्मुकः ( अग्न्यङ्गारः ) इव ( यथा ) पत ( आक्रमेः ) स्वर्गराज्ययोर्मध्ये एकं गच्छेत्यर्थः।

व्युत्पत्तिः—स्वर्गद्वारेण उपमीयते इति स्वर्गद्वारोपमम्। अमृतेन उपमीयते इति अमृतोपमम्।

भावार्थः—स्वर्गद्वार के समान अथवा अमृत के समान मेरे राज्य को शत्रु ने ले लिया है इस तरह स्वर्ग, राज्य दोनों का एक ही मार्ग जानकर युद्ध में शत्रुदल पर अग्नि के अङ्गारे की भाँति कूद पड़, या तो विजय करके राज्य ही ले, अन्यथा स्वर्ग तो निश्चित ही है ॥ २९ ॥

जहि शत्रून् रणे राजन्! स्वधर्ममनुपालय।
मा त्वादृशं सुकृपणं शत्रूणां भयवर्धनम्॥३०॥

पदच्छेदः—जहि, शत्रून्, रणे, राजन्, स्वधर्मम्, अनुपालय, मा, त्वादृशम्, सुकृपणम्, शत्रूणाम्, भयवर्द्धनम्।

अन्वयः—हे राजन्! रणे, शत्रून्, जहि, स्वधर्मम्, अनुपालय, सुकृपणम्, शत्रूणाम्, भयवर्द्धनम्, त्वा, मादृशम्।

व्याख्या—हे राजन्! (हे नृप!) रणे (युद्धे) शत्रून् (वैरिणः) जहि (नाशय) स्वधर्मम् (क्षत्रियधर्मम्) अनुपालय (रक्ष) मा (न) त्वादृशम् (त्वत्समम्) सुकृपणम् (कातरम्) शत्रूणाम् (वैरिणाम्) भयवर्द्धनम् (भयच्छेदनम्) त्वा (त्वाम्) मादृशम् (माद्राक्षम्)।

व्युत्पत्तिः—स्वस्य धर्मः तम्। (सुष्ठु कृपणः तम्) धातूनामनेकार्थत्वात् भयस्य वर्द्धनम् हरणमित्यर्थः। मा दृशम् अत्र माङ्योगात् अडभावः दृशिर् प्रेक्षणे इति धातोः "इरितो वा" इत्यङ्पक्षे लुङुत्तमैकवचनम्।

भावार्थः—हे राजन्! तू युद्ध में शत्रुओं को मारकर अपने क्षत्रियधर्म का पालन कर, कहीं ऐसा न हो कि तुम जैसे कातर, शत्रुओं को अभय देनेवाले व्यक्ति का मेरा सामना हो जाय॥ ३०॥

अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम्।
अपि त्वा ननु पश्येयं दीनाद्दीनमिवास्थितम्॥३१॥

पदच्छेदः—अस्मदीयैः, च, शोचद्भिः, नदद्भिः, च, परैः, वृतम्, अपि, त्वा, ननु, पश्येयम्, दीनात्, दीनम्, इव, आस्थितम्।

अन्वयः—शोचद्भिः, अस्मदीयैः, नदद्भिः, च, परैः, वृतम्, अपि, त्वा, दीनात्, दीनम्, इव, आस्थितम्, ननु, पश्येयम्।

व्याख्या—शोचद्भिः (शोकं कुर्वद्भिः) अस्मदीयैः (मदीयैः आत्मीयैः जनैः) नदद्भिः (नादं कुर्वद्भिः) च परैः (शत्रुभिः) वृतम् (छन्नम्) अपि, त्वा (त्वाम्) दीनाद्दीनम् (आतदीनम्) इव (यथा) आस्थितम् (वर्तमानम्) ननु (नैव) पश्येयम् (अवलोकयेयम्।

व्युत्पत्तिः—मम इमे अस्मदीयाः तैः। नद + शतृ + भिस्। आसमन्तात् स्थितम् आस्थितम्।

भावार्थः—मेरे आत्मीय जन शोक करते हुए तथा शत्रुवर्ग के लोग दहाड़ते हुए तुम्हारे पास घेर कर खड़े हों, इस तरह अधिक दीन अवस्था में विराजमान तुम्हें न देखूँ॥ ३१॥

हृष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥३२॥

पदच्छेदः— हृष्य, सौवीरकन्याभिः, श्लाघस्व, अर्थैः, यथा, पुरा, मा, च, सैन्धवकन्यानाम्, अवसन्नः, वशम्, गमः ।

अन्वयः— हृष्य, सौवीरकन्याभिः, यथा, पुरा ( तथा ) अर्थैः, श्लाघस्व, अवसन्नः, सैन्धवकन्यानाम्, वशम्, मागमः ।

व्याख्या—हृष्य ( प्रसन्नः भूत्वा ( सौवीरकन्याभिः ( स्वदारैः ) सह यथा पुरा ( पूर्वम् ) तथा अर्थैः ( धनैः राज्यादिभिः ) श्लाघस्व ( प्रशंसितो भव ) परन्तु अवसन्नः ( शिथिलः भूत्वा ) सैन्धवकन्यानाम् ( सिन्धुदेशजकन्यानाम् ) वशम् ( अधिकारम् ) मागमः ( मागच्छ ) ।

व्युत्पत्तिः—आर्षत्वात् ल्यप् ( हृष्य इति ) । सौवीरस्य कन्याः ताभिः । सैन्धव्यः सैन्धवानां वा कन्याः सैन्धवकन्याः ताभिः ।

भावार्थः—तुम पहले की भाँति अपनी सम्पत्तियों सहित सौवीर देश की कन्याओं के संग ही सुशोभित हो । कहीं इस कातरता के कारण विवश होकर सिन्धुदेश की कन्याओं का संग न कर बैठे ॥३२॥

युवा रूपेण सम्पन्नो विद्ययाऽभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥३३॥

पदच्छेदः— युवा, रूपेण, सम्पन्नः, विद्यया, अभिजनेन, च, यद्, त्वादृशः, विकुर्वीत, यशस्वी, लोकविश्रुतः ।

अन्वयः—रूपेण, युवा, विद्यया, अभिजनेन, च, सम्पन्नः, यत्, त्वादृशः, यशस्वी, लोकविश्रुतः, विकुर्वीत ।

व्याख्या—रूपेण ( सौन्दर्येण ) युवा ( युवकः ) विद्यया ( उचिताध्ययनेन ) अभिजनेन ( उत्तमकुलजन्मना ) च सम्पन्नः ( समन्वितः ) असि । यत् ( यदि ) त्वादृशः ( त्वत्समः ) यशस्वी ( कीर्त्तिमान् ) लोकविश्रुतः ( जगत्प्रसिद्धः ) विकुर्वीत ( अपसरण कुर्वीत ) तदा मरणमेव मन्ये इत्युत्तरेण सम्बन्धः ।

व्युत्पत्तिः—यत्र स्वयं वसति स नाभिजनः किन्तु यत्र पूर्वैरुषितं सः । लोकेषु विश्रुतः ( स० त० )

भावार्थः—तुम्हारे समान रूप, अवस्था, विद्या, कुल आदि से सुसम्पन्न, लोक में प्रसिद्ध व्यक्ति यदि अपने पथ से भागे तो वह मरण के ही समान है ॥३३॥

अधुर्यवच्च वोढव्ये मन्ये मरणमेव तत् ।
यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ॥३४॥

पदच्छेदः—अधुर्यवत्, च, वोढव्ये, मन्ये, मरणम्, एव, तत्, यदि, त्वाम्, अनुपश्यामि, परस्य, प्रियवादिनम्।

अन्वयः—अधुर्यवत्, च, वोढव्ये, तत्, मरणम्, एव, मन्ये, यदि, त्वाम्, परस्य, अनु, पश्यामि प्रियवादिनं वा। (का शान्तिः हृदयस्य मे इति परेणान्वयः)।

व्याख्या—अधुर्यवत् ( अदान्तवृषभवत् ) च वोढव्ये ( वहनकार्ये ) अपसरणं कुर्यात् तत् ( तस्य पलायनम् ) मरणम् ( मृत्युम् ) एव मन्ये ( अवगच्छामि ) यदि ( चेत् ) त्वाम् ( स्वपुत्रम् ) परस्य ( शत्रोः ) अनु ( पश्चात् ) पश्यामि ( अवलोकये ) प्रियवादिनम् ( मिष्टभाषिणम् ) वा ( तदा का शान्तिः हृदयस्य मे इति परेणान्वयः )।

व्युत्पत्तिः—धुरं वहतीति धुर्यः न धुर्यः अधुर्यः स इव अधुर्यवत्। प्रियं वदतीति प्रियवादी तम् प्रियवादिनम्।

भावार्थः—तुम्हारे जैसा मनुष्य विना नाथवाले बैल की तरह बोझा उठाने के समय भाग जाय, या बैठ रहे तो मरण तुल्य ही है। और यदि तुम्हें शत्रुओं के पीछे चलते अथवा उनसे मीठी बातें करते मैं देख लूँ तो मेरे हृदय में क्या शान्ति रह सकती है? ॥३४॥

पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे।
नाऽस्मिन् जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ॥३५॥

पदच्छेदः—पृष्ठतः, अनुव्रजन्तम्, वा, का, शान्तिः। हृदयस्य, मे, न, अस्मिन्, जातु, कुले, जातः, गच्छेत्, यः, अन्यस्य, पृष्ठतः।

अन्वयः—पृष्ठतः, अनुव्रजन्तम्, वा ( अनुपश्यामि इति पूर्वेण सम्बन्धः ) ( तदा ) मे, हृदयस्य, का, शान्तिः, यः, अन्यस्य, पृष्ठतः, गच्छेत्, अस्मिन्, कुले, जातु, न, जातः।

व्याख्या—पृष्ठतः ( पृष्ठे ) अनुव्रजन्तम् ( अनुगच्छन्तम् ) वा अनुपश्यामि तदा मे ( मम ) हृदयस्य ( चेतसः ) का शान्तिः ( कुतः शान्तिः ) न कुतोऽपि इति भावः। यः ( जनः ) अन्यस्य पृष्ठतः ( पृष्ठे ) गच्छेत् ( व्रजेत् ) अस्मिन् कुले ( एतत्कुले ) जातु ( कदाचित् अपि ) न जातः ( नोत्पन्नः )।

व्युत्पत्तिः—जातु इति अव्ययम्। पृष्ठे इति विग्रहे सप्तम्याः तसिल्।

भावार्थः—तुम्हें शत्रुओं के पीछे पीछे चलता देख मेरे हृदय को कैसे शान्ति मिलेगी? क्योंकि किसी भी व्यक्ति के पीछे चलनेवाला आज तक इस कुल में जन्म नहीं लिया था ॥३५॥

न त्वं परस्यानुचरस्तात ! जीवितुमर्हसि ।
अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतम् ॥३६॥

पदच्छेदः—न, त्वम्, परस्य, अनुचरः, तात !, जीवितुम्, अर्हसि, अहम्, हि, क्षत्रहृदयम्, वेद, यत्, परिशाश्वतम् ।

अन्वयः—हे तात !, त्वम्, परस्य, अनुचरः, जीवितुम्, न, अर्हसि, हि, अहम्, क्षत्रहृदयम्, वेद, यत्, परिशाश्वतम् ।

व्याख्या—हे तात ! ( हे पुत्र ! ) त्वम् (सञ्जयः) परस्य (अन्यस्य) अनुचरः ( सेवकः ) सन् जीवितुम् ( प्राणान् धारयितुम् ) न अर्हसि ( योग्योऽसि ) हि ( यतः ) अहम् ( विदुला ) क्षत्रहृदयम् ( क्षत्रियचेत् ) वेद ( जानामि ) यत् परिशाश्वतम् ( सर्वथैव एकरूपम् अक्षीणम् ( सनातनम् ) अस्ति ॥३६॥

व्युत्पत्तिः—अनुचरतीति अनुचरः । क्षत्रस्य हृदयम् ष० त० ।

भावार्थः—हे पुत्र ! तुझ सरीखे व्यक्ति को दूसरे का सेवक बन कर जीना व्यर्थ है । मैं उस क्षात्रधर्म को जानती हूँ जो सनातन है ॥ ३६ ॥

पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।
शाश्वतं चाऽव्ययं चैव प्रजापतिविनिर्मितम् ॥३७॥

पदच्छेदः—पूर्वैः, पूर्वतरैः, प्रोक्तम्, परैः, परतरैः, अपि, शाश्वतम्, च, अव्ययम्, च, एव, प्रजापतिविनिर्मितम् ।

अन्वयः—पूर्वैः, पूर्वतरैः, परैः, परतरैः, अपि, च, प्रोक्तम्, शाश्वतम्, च, अव्ययम, च, एव, प्रजापतिविनिर्मितम् ( क्षत्रहृदयमिति पूर्वेणान्वयः )

व्याख्या—पूर्वैः ( पूर्वजैः ) पूर्वतरैः ( पूर्वजपूर्वजैः ) परैः ( अन्यवंशीयैः ) परतरैः ( वृद्धैः ) अपि च प्रोक्तम् ( कथितम् ) शाश्वतम् ( सनातनम् ) च अव्ययम् ( अपक्षयहीनम् ) च एव ( अपि ) प्रजापतिविनिर्मितम् ( ब्रह्मनिर्मितम् ) क्षत्रहृदयम् प्रोक्तम् इति पूर्वेण सम्बन्धः ।

व्युत्पत्तिः—अतिशयेन पूर्वे इति पूर्वतराः तैः । एवम् परतरैः । न व्येति इति अव्ययम् । प्रजापतिना विनिर्मितम् प्रजापतिविनिर्मितम् ( तृ० त० ) ।

भावार्थः—विधाता के बनाये हुए, सदैव एकरूप से रहनेवाले, पूर्वपुरुषों तथा अत्यन्त प्राचीन वृद्धों द्वारा शिक्षित उस क्षात्र हृदय को मैं जानती हूँ ॥३७॥

यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रकर्मवित् ।
भयाद् वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥३८॥

पदच्छेदः—यः, वै, कश्चित्, इह, आजातः, क्षत्रियः, क्षत्रकर्मवित्, भयात्, वृत्तिसमीक्षः, वा, न, नमेत्, इह, कस्यचित् ।

**अन्वयः**—यः, वै, कश्चित्, इह, क्षत्रकर्मवित्, क्षत्रियः, इह, आजातः (सः) भयात्, वृत्तिसमीक्षः, वा, कस्यचित्, न, नमेत् ।

**व्याख्या**—यः वै कश्चित् ( पुरुषविशेषः ) इह ( क्षत्रियकुले ) क्षत्रकर्मवित् ( क्षत्रियकर्माभिज्ञः ) क्षत्रियः ( क्षत्रियपदवाच्यः ) आजातः ( सम्यग् जातः ) सः भयात् ( भीतेः ) वृत्तिसमीक्षः ( वृत्तिं समीक्षमाणः वा कस्यचित् ( कस्यापि ) पुरतः न नमेत् ( प्रणमेत् ) ।

**व्युत्पत्तिः**—क्षत्रस्य कर्म क्षत्रकर्म वेत्ति इति क्षत्रकर्मवित् । आ समन्तात् जातः आजातः । वृत्तिं समीक्षते इति वृत्तिसमीक्षः ।

**भावार्थः**—जो पुरुष क्षत्रियकुल में जन्म लेता है, अपने कुलधर्म को जानता है वह किसी के भय से अथवा किसी जीविका की अपेक्षा से भी किसी के सामने नमना नहीं जानता ॥३८॥

उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥३९॥

**पदच्छेदः**—उद्यच्छेत्, एव, न, नमेत्, उद्यमः, हि, एव, पौरुषम्, अपि, अपर्वणि, भज्येत, न, नमेत, इह, कस्यचित् ।

**अन्वयः**—उद्यच्छेत्, एव, न, नमेत्, हि, उद्यमः, एव, पौरुषम् ( सः ) अपर्वणि, भज्येत, अपि ( परन्तु ) कस्यचित्, न, नमेत् ।

**व्याख्या**—( सः ) उद्यच्छेत् ( उद्योगं कुर्यात् ) एव न नमेत् ( प्रणमेत् ) हि ( यतः ) उद्यमः ( उद्योगः ) एव पौरुषम् ( पुरुषार्थः ) अपर्वणि ( अकाण्डे, वृथापि इत्यर्थः ) भज्येत ( खण्ड्येत ) अपि ( परन्तु ) कस्यचित् ( कस्यापि पुरतः ) न नमेत् ( न प्रणमेत् ) दैन्यं न प्रकटयेदित्यर्थः ।

**व्युत्पत्तिः**—उद्यच्छेत्—उत्पूर्वक-यम-धातोः लिङि यच्छादेशः । न पर्व अपर्व तस्मिन् अपर्वणि ।

**भावार्थः**—वह क्षत्रिय बालक उद्यम ही को परम पुरुषार्थ मान उसी के प्रयत्न में रहेगा न कि किसी के सामने नत होगा, भलेही वह अनेक कष्ट पावे ॥३९॥

मातङ्गो मत्त इव च परीयात् स महामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ! ॥४०॥

**पदच्छेदः**—मातङ्गः, मत्तः, इव, च, परीयात्, सः, महामनाः, ब्राह्मणेभ्यः, नमेत्, नित्यम्, धर्माय, एव, च सञ्जय ! ।

**अन्वयः**—हे सञ्जय ! महामनाः, सः, मत्तः, मातङ्गः, इव, च, परीयात्, धर्माय, एव, ब्राह्मणेभ्यः, च, नित्यम्, नमेत् ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) महामनाः ( महाचित्तः ) सः ( क्षत्रियः ) मत्तः ( प्रमत्तः ) मातङ्गः ( हस्ती ) इव ( यथा ) च परीयात् ( युद्धस्थले भ्रमणं कुर्यात् ) विचरेदित्यर्थः । केवलम् धर्माय ( धर्मनिमित्तम् ) ब्राह्मणेभ्यः (द्विजेभ्यः) च नित्यम् ( सर्वथा ) नमेत् ( प्रणमेत् ) नाऽन्येभ्यः ।

व्युत्पत्तिः—सञ्जयतीति सञ्जयः, तत् सम्बुद्धौ हे सञ्जय । महत् मनः यस्य स महामनाः ।

भावार्थः—हे सञ्जय ! वह वीर क्षत्रिय मतवाले हाथी की तरह युद्धस्थल में विचरता है । केवल धर्म की रक्षा के लिए ब्राह्मणों से सदा नमस्कार करता है । अन्य कोई भी शक्ति उसके लिए नहीं जिसके सामने वह सर झुका ले ॥४०॥

नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥४१॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने चतुस्त्रिंशदधिकशततमोऽध्यायः ॥१३४॥

पदच्छेदः—नियच्छन्, इतरान्, वर्णान्, विनिघ्नन्, सर्वदुष्कृतः, ससहायः, असहायः, वा, यावज्जीवम्, तथा भवेत् ।

अन्वयः—इतरान्, वर्णान्, नियच्छन्, सर्वदुष्कृतः, विनिघ्नन्, ससहायः, असहायः, वा, यावज्जीवम्, तथा भवेत् ।

व्याख्या—इतरान् ( अपरान् ) वर्णान् ( वैश्यादीन् ) नियच्छन् ( नियमयन् ) सर्वदुष्कृतः ( निखिलपापिनः ) विनिघ्नन् ( विनाशयन् ) ससहायः ( सहायवान् ) असहायः ( साधनरहितः ) वा यावज्जीवम् ( प्राणावधि ) तथा ( पूर्वोक्तक्षात्रधर्मयुक्तः ) भवेत् ( स्यात् ) ।

व्युत्पत्तिः—दुष्कुर्वन्तीति दुष्कृतः सर्वे च ते दुष्कृतः सर्वदुष्कृतः । सहायेन सहितः ससहायः । नास्ति सहायो यस्य सः । जीवम् यावत् इति यावज्जीवम् ( अव्ययी. ) ।

भावार्थः—अन्यवर्णों का नियमन करता हुआ, सभी दुष्टों को दण्डित करता हुआ, सहाययुक्त अथवा निस्सहाय जीवनपर्यन्त अपने क्षत्रियधर्म के पालन में लगा रहे ॥४१॥

इति महाभारतीये विदुलोपाख्याने आचार्यश्रीराजनारायणशास्त्रिशुक्लरचितायां प्रभाटीकायां द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ।

## पुत्र उवाच ।

कृष्णायसस्येव च ते संहृत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे ॥ १ ॥

पदच्छेदः—कृष्णायसस्य, इव, च, ते, संहृत्य, हृदयम्, कृतम्, मम, मातः, तु, अकरुणे, वीरप्रज्ञे, हि, अमर्षणे ।

अन्वयः—हे अकरुणे ! वीरप्रज्ञे ! अमर्षणे ! मम, मातः !, ते, हृदयम्, च, कृष्णायसस्य, इव, संहृत्य, कृतम् ।

व्याख्या—हे अकरुणे ! ( हे निर्दये ! ) वीरप्रज्ञे ( वीरबुद्धे ) अमर्षणे ( क्रोधवति ! ) मम ( सञ्जयस्य ) मातः ( जननि ) ते ( तव ) हृदयम् ( चेतः ) च, कृष्णायसस्य ( लौहस्य ) इव ( यथा ) संहृत्य ( पिण्डीकृत्य ) कृतम् ( विनिर्मितम् ) विधात्रेति शेषः ।

व्युत्पत्तिः—नास्ति करुणा यस्याः, वीरा प्रज्ञा यस्याः सा, तत्सम्बुद्धौ रूपम्, बहुव्रीहिसमासः । न मर्षयतीत्यमर्षणा तत्सम्बुद्धौ ।

भावार्थः—हे मेरी माता ! तू दया से शून्य है, वीरबुद्धिवाली है, क्रोधी है, साथही तुम्हारा हृदय मानो विधाता ने लोहे का बनाया है । जिस कारण से तू इस तरह कहती है ॥ १ ॥

अहो ! क्षत्रसमाचारो यत्र मामितरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ॥ २ ॥

पदच्छेदः—अहो, क्षत्रसमाचारः, यत्र, माम्, इतरम्, यथा, नियोजयसि, युद्धाय, परमाता, इव, माम्, तथा ।

अन्वयः—अहो, क्षत्रसमाचारः, यत्र, यथा, परमाता, इतरम् तथा, माम्, युद्धाय, नियोजयसि ।

व्याख्या—अहो ( धिक् ) क्षत्रसमाचारः ( क्षत्रियधर्मः ) यत्र ( यस्मिन् ) यथा परमाता ( अन्यजननी ) इतरम् ( अन्यम् ) तथा ( तेन रूपेण ) माम् ( सञ्जयम् ) युद्धाय ( संग्रामाय ) नियोजयसि ( नियुक्तं करोषि ) ।

व्युत्पत्तिः—क्षत्रस्य समाचारः क्षत्रसमाचारः ( तत्पु० ) । परस्य माता परमाता ( ष० तत्पु० ) ।

भावार्थः—धिक्कार है इस क्षत्रियधर्म को जिसमें यह दशा कि मेरी माता

दूसरे की माता की तरह विना किसी मोह के मुझे युद्ध में भेजना चाहती है ॥२॥

ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ।
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ॥ ३ ॥

**पदच्छेदः**—ईदृशम् , वचनम् , ब्रूयात् , भवती, पुत्रम् , एकजम् , किम् , नु, ते, माम् , अपश्यन्त्याः, पृथिव्या, अपि, सर्वया ।

**अन्वयः**—भवती, एकजम् , पुत्रम् , ईदृशम् , वचनम् , ब्रूयात् , माम् , अपश्यन्त्याः, ते, सर्वया, पृथिव्या, अपि, किम् , नु ।

**व्याख्या**—भवती ( माता ) एकजम् ( अभ्रातृकम् ) पुत्रम् ( सुतम् ) ईदृशम् ( एतादृशम् ) वचनम ( वाक्यम् ) ब्रूयात् ( वदेत् ) माम् ( पुत्रम् ) अपश्यन्त्याः ( अनवलोकयन्त्याः ) ते ( तव ) सर्वया ( सम्पूर्णया ) पृथिव्या ( भूम्या ) अपि किम् ? ( न किमपि ) नु ( वितर्के ) ।

**व्युत्पत्तिः**—एक एव जातः एकजः तम् । न पश्यन्ती अपश्यन्ती तस्याः ।

**भावार्थः**—वह ऐसा विलक्षण क्षत्रियधर्म है कि जिसमें अपने एकलौते पुत्र मुझको तू ऐसी बातें कह रही है। भला विना मेरे तुम्हें इस सम्पूर्ण पृथ्वी के राज्य से भी क्या होगा ? ॥ ३ ॥

किमाभरणकृत्येन किं भोगैर्जीवितेन वा ।
मयि वा सङ्गरहते प्रियपुत्रे विशेषतः ॥ ४ ॥

**पदच्छेदः**—किम् , आभरणकृत्येन, किम् , भोगैः, जीवितेन, वा, मयि, वा, सङ्गरहते, प्रियपुत्रे, विशेषतः ।

**अन्वयः**—प्रियपुत्रे, मयि, सङ्गरहते, विशेषतः, आभरणकृत्येन, किम् ? भोगैः, जीवितेन, वा, किम् ? ।

**व्याख्या**—प्रियपुत्रे ( प्रियसुते ) मयि ( सञ्जये ) सङ्गरहते ( युद्धे मारिते ) विशेषतः आभरणकृत्येन ( आभूषणप्रयोजनेन ) किम् ? ( न किमपि प्रयोजनम् ) भोगैः ( सुखादिभिः ) जीवितेन ( जीवनेन ) वा किम् ? ( न प्रयोजनं ) व्यर्थमित्यर्थः ।

**व्युत्पत्तिः**—प्रियश्चासौ पुत्रः तत्सम्बुद्धौ । सङ्गरे हतः सङ्गरहतः तस्मिन् । आभरणानां कृत्यम् तेन ।

**भावार्थः**—विशेष कर मुझ जैसे तुम्हारे प्रियपुत्र के युद्ध में मारे जाने पर तुम्हें समस्त पृथ्वी के राज्य तथा गहने आदि से क्या प्रयोजन ? फिर तो जीने से ही तेरे क्या लाभ ? ॥ ४ ॥

## मातोवाच ।

सर्वावस्था हि विदुषां तात ! धर्मार्थकारणात् ।
तावेवाभिसमीक्ष्याहं सञ्जय ! त्वामचूचुदम् ॥५॥

**पदच्छेदः**—सर्वावस्था, हि, विदुषाम्, तात !, धर्मार्थकारणात्, तौ, एव, अभिसमीक्ष्य, अहम्, सञ्जय !, त्वाम्, अचूचुदम् ।

**अन्वयः**—हे तात !, हि, धर्मार्थकारणात्, विदुषाम्, सर्वावस्था, हे सञ्जय !, अहम्, तौ, एव, अभिसमीक्ष्य, त्वाम्, अचूचुदम् ।

**व्याख्या**—हे तात !, ( हे पुत्र ! ) हि ( यतः ) धर्मार्थकारणात् ( धर्मार्थाभ्याम् ) विदुषाम् ( विज्ञानाम् ) सर्वावस्था ( गार्हस्थ्यादिरूपा ) हे सञ्जय ! ( हे सुत ! ) अहम् ( विदुला ) तौ ( धर्मार्थौ ) एव अभिसमीक्ष्य ( विचार्य ) त्वाम् ( पुत्रम् ) युद्धाय अचूचुदम् ( प्रैरयम् ) ।

**व्युत्पत्तिः**—धर्मश्च अर्थश्च धर्मार्थौ एव कारणम् तस्मात् । सर्वा अवस्था सर्वावस्था ।

**भावार्थः**—माता ने कहा कि हे पुत्र ! विद्वान् लोग धर्म तथा अर्थ के लिए ही सभी कार्यों का आरम्भ करते हैं । हमने तुम्हारे प्रति उन्हीं दोनों को सामने रखकर प्रेरणा की है ॥ ५ ॥

स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ॥६॥

**पदच्छेदः**—सः, समीक्ष्य, क्रमोपेतः, मुख्यः, कालः, अयम्, आगतः, अस्मिन्, चेत्, आगते, काले, कार्यम्, न, प्रतिपद्यसे ।

**अन्वयः**—समीक्ष्य, क्रमोपेतः, मुख्यः, सः, अयम्, कालः, आगतः, अस्मिन्, काले, आगते, कार्यम्, न, प्रतिपद्यसे, चेत् ।

**व्याख्या**—समीक्ष्य ( विचार्य ) क्रमोपेतः ( क्रमागतः ) मुख्यः ( प्रधानः ) सः अयम् ( धर्मार्थसाधकः ) कालः ( युद्धसमयः ) आगतः ( समायातः ) अस्मिन् ( एतस्मिन् ) काले ( समये ) आगते ( प्राप्ते ) कार्यम् ( कर्तव्यम् युद्धम् ) न प्रतिपद्यसे ( प्राप्नुषे ) चेत् ( यदि ) ।

**व्युत्पत्तिः** क्रमेण उपेतः क्रमोपेतः । मुखे भवः मुख्यः प्रधान इत्यर्थः ।

**भावार्थः**—पराक्रम दिखलाने का यह मुख्य समय तुम्हारे सामने है । अगर ऐसे उचित समय पर तुम युद्ध नहीं करते····· ॥ ६ ॥

असंभावितरूपस्त्वमानृशंस्यं करिष्यसि ।
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय ! ॥ ७ ॥

पदच्छेदः—असम्भावितरूपः, त्वम्, आनृशंस्यम्, करिष्यसि, तम्, त्वाम्, अयशसा, स्पृष्टम्, न, ब्रूयाम्, यदि, सञ्जय ! ।

अन्वयः—हे सञ्जय !, त्वम्, आनृशंस्यम्, करिष्यसि, अयशसा, स्पृष्टम्, तम्, त्वाम्, यदि, न, ब्रूयाम् ( तदा ) ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) त्वम् ( सञ्जयः ) आनृशंस्यम् ( शत्रुषु स्वदेहे वा दयाम् ) करिष्यसि ( विधास्यसि ) ततः असम्भावितरूपः ( तिरस्कृत-रूपः भविष्यसि । एवम् त्वाम् ( सञ्जयम् ) अयशसा ( अकीर्त्या ) स्पृष्टम् ( सम्पृक्तम् ) तम् ( तादृशम् ) यदि ( चेत् ) न ब्रूयाम् ( न वदेयम् ) तदा खरीवात्सल्यमाहुः इति परेण सम्बन्धः ।

व्युत्पत्तिः— न यशः अयशः तेन । न नृशंसः अनृशंसः तस्य भावः आनृशंस्यम् ।

भावार्थः—और शत्रुओं पर तथा अपने शरीर पर दया करोगे जिससे तुम्हारा तिरस्कार होगा । संसार में तुम्हारा अयश होगा । ऐसी अवस्था में अगर हम तुम्हें युद्ध के लिए प्रेरणा न करें ( सन्मार्ग का उपदेश न करें ) तो— ॥७॥

खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ।
सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ॥ ८ ॥

पदच्छेदः—खरीवात्सल्यम्, आहुः, तत्, निस्सामर्थ्यम्, अहेतुकम्, सद्भिः, विगर्हितम्, मार्गम्, त्यज, मूर्खनिषेवितम् ।

अन्वयः—तत्, निस्सामर्थ्यम्, अहेतुकम्, खरीवात्सल्यम्, आहुः, ( तस्मात् ) सद्भिः, विगर्हितम्, मूर्खनिषेवितम्, मार्गम्, त्यज ।

व्याख्या—तत् ( पूर्वोक्तम् ) निस्सामर्थ्यम् ( सामर्थ्यविरहितम् ) अहेतुकम् ( निष्कारणम् ) खरीवात्सल्यम् ( खरीपुत्रस्नेहम् ) आहुः ( कथयन्ति ) ( तस्मात् ) सद्भिः ( सज्जनैः ) विगर्हितम् ( निन्दितम् ) मूर्खनिषेवितम् ( मूर्खसंसेवितम् ) मार्गम् ( पन्थानम् ) त्यज ( परित्यज ) ।

व्युत्पत्तिः—निर्गतं सामर्थ्यं यस्मात् तत् । नास्ति हेतुः यस्मिन् तत् उभयत्र ( बहु० ) मूर्खैः निषेवितः तम् ( तृ. त. ) ।

भावार्थः—ऐसे निश्शक्ति, अकारण प्रेम को गधी का प्रेम कहते हैं । अतः सत्पुरुषों द्वारा निन्दित उस मार्ग को छोड़कर सन्मार्ग पर चलो ॥८॥

अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ।
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ॥ ९ ॥

पदच्छेदः—अविद्या, वै, महती, अस्ति, याम्, इमाम्, संश्रिताः, प्रजाः, तव, स्यात्, यदि, सद्वृत्तम्, तेन, मे, त्वम्, प्रियः, भवेः ।

अन्वयः—प्रजाः, याम्, इमाम्, संश्रिताः, ( सा ) वै, महती, अविद्या, अस्ति, यदि, तव, सद्वृत्तम्, स्यात्, तेन, त्वम्, मे, प्रियः, भवेः ।

व्याख्या—प्रजाः ( लोकाः ) याम्, इमाम् ( एताम् ) संश्रिताः ( आश्रिताः ) सा वै महती ( प्रचण्डा ) अविद्या ( अज्ञानम् ) अस्ति ( वर्तते ) यदि ( चेत् ) तव ( सञ्जयस्य ) सद्वृत्तम् ( सदाचरणम् ) स्यात् ( भवेत् ) तेन ( तादृशसदाचरणेन ) त्वम् ( सञ्जयः ) मे ( मम ) प्रियः ( प्रेमपात्रम् ) भवेः ( जायेथाः ) ।

व्युत्पत्तिः—प्रजायते इति प्रजा । प्रजा स्यात् सन्ततौ जने इति कोशः । सद् वृत्तम् सद्वृत्तम् । न विद्या अविद्या, विद्या विरुद्धा वा ।

भावार्थः—यह वह बड़ी अविद्या ( अज्ञान ) कि लोग आत्मा को ठीक न पहचान कर इस पार्थिव शरीर पर ममता रखते हैं । तू इसे छोड़ कर क्षत्रियों के उस धर्म का—जिसमें कि शरीर की कोई परवाह नहीं की जाती—पालन करे तो मेरी अत्यन्त प्रसन्नता तथा प्रेम के पात्र बनोगे ॥ ९ ॥

धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥१०॥

पदच्छेदः—धर्मार्थगुणयुक्तेन, न, इतरेण, कथञ्चन, देवमानुषयुक्तेन, सद्भिः, आचरितेन, च ।

अन्वयः—धर्मार्थगुणयुक्तेन, कथञ्चन, इतरेण, न, दैवमानुषयुक्तेन, सद्भिः, आचरितेन, च ।

व्याख्या—धर्मार्थगुणयुक्तेन ( धर्मार्थोपयुक्तगुणवता ) कथञ्चन ( कथमपि ) इतरेण ( एतद्भिन्नेन ) न, किन्तु दैवमानुषयुक्तेन ( दैवमानुषोपयुक्तगुणवता ) त्वया भाव्यमिति शेषः, सद्भिः ( महापुरुषैः ) आचरितेन ( वर्तितेन ) च पथा गन्तव्यमिति शेषः ।

व्युत्पत्तिः—धर्मश्च अर्थश्च धर्मार्थौ तयोः उपयुक्ताः ये गुणाः तैः युक्तः तेन । दैवाश्च मानुषाश्च तैः युक्तः तेन ।

भावार्थः—तुम्हें धर्म तथा अर्थ के उपयुक्त गुणों तथा दैव एवं मानुषगुणों से युक्त होना चाहिए । अच्छे पुरुषों के आचरितमार्ग से चलना चाहिए ॥१०॥

यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि दुर्विनीतेन दुर्धिया ॥११॥

पदच्छेदः—यः, हि, एवम्, अविनीतेन, रमते, पुत्रनप्तृणा, अनुत्थानवता, च, अपि, दुर्विनीतेन, दुर्धिया ।

अन्वयः—यः, हि, एवम्, अविनीतेन, पुत्रनप्तृणा, रमते, अनुत्थानवता, दुर्विनीतेन, दुर्धिया, च, अपि ( पुत्रेण रमते इत्युत्तरेणान्वयः ) ।

व्याख्या—यः ( पुरुषः ) हि ( यतः ) एवम् ( अमुना प्रकारेण ) अविनीतेन (दुर्विनीतेन) पुत्रनप्तृणा ( पुत्रपौत्रादिभिः ) रमते ( खेलति ) अनुत्थानवता ( शत्रुम्प्रति अनाक्रमणवता ) च ( पुनः ) अपि दुर्विनीतेन ( विनयशून्येन ) दुर्धिया ( दुर्बुद्धिना ) पुत्रेण रमते इत्युत्तरेणान्वयः ।

व्युत्पत्तिः—न विनीतः, तेन । उत्थानमस्ति अस्य उत्थानवान्, न उत्थानवान् तेन । दुष्टा धीर्यस्य तेन ।

भावार्थः—जो व्यक्ति विनयहीन पुरुषार्थहीन पुत्र पौत्र तथा उद्दण्ड मूर्ख से रमता है ॥११॥

रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम् ।
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ॥१२॥

पदच्छेदः—रमते, यः, तु, पुत्रेण, मोघम्, तस्य, प्रजाफलम्, अकुर्वन्तः, हि, कर्माणि, कुर्वन्तः, निन्दितानि, च ।

अन्वयः—यः, तु, पुत्रेण, रमते, तस्य, प्रजाफलम्, मोघम, हि, कर्माणि, अकुर्वन्तः, निन्दितानि, च, कुर्वन्तः ( पुरुषाधमाः लभन्ते इत्युत्तरेणान्वयः ) ।

व्याख्या—यः ( क्षत्रियः ) तु पुत्रेण ( सुतेन ) रमते ( आनन्दं मनुते ) तस्य ( क्षत्रियस्य ) प्रजाफलम् ( सन्तानफलम् ) मोघम् ( निरर्थकम् ) हि ( यतः ) कर्माणि ( उचितानि ) अकुर्वन्तः ( अनाचरन्तः ) निन्दितानि ( अनुचितानि ) कुर्वन्तः ( आचरन्तः ) पुरुषाधमाः सुखं न लभन्ते इति उत्तरेणान्वयः ।

व्युत्पत्तिः—प्रजायाः फलम् प्रजाफलम् ष. त. । न कुर्वन्तः अकुर्वन्तः ।

भावार्थः—जो क्षत्रिय उक्त प्रकार के पुत्र से आनन्द समझता है उसका सन्तान फल व्यर्थ ही है । उचित कर्मों को न कर अनुचितों को करके ( नीच पुरुष सुख नहीं पाते ) ॥१२॥

सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ।
युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च ॥ १३ ॥

पदच्छेदः—सुखम्, न, एव, इह, न, अमुत्र, लभन्ते, पुरुषाधमाः, युद्धाय, क्षत्रियः, सृष्टः, सञ्जय !, इह, जयाय, च ।

अन्वयः—पुरुषाधमाः, इह, नैव, अमुत्र ( च ) सुखम्, न, लभन्ते, हे सञ्जय ! इह, क्षत्रियः, युद्धाय जयाय, च सृष्टः ।

व्याख्या—पुरुषाधमाः ( जनापसदाः ) इह ( लोके ) नैव ( सर्वथा न )

अमुत्र ( परलोके ) च सुखम् ( आनन्दम् ) न लभन्ते ( प्राप्नुवन्ति ) हे सञ्जय ! ( हे पुत्र ! ) इह ( संसारे ) क्षत्रियः ( क्षत्रियवंशः ) युद्धाय ( धर्मलोकोचितसंग्रामाय ) जयाय ( विजयाय ) च सृष्टः ( विधात्रा विनिर्मितः ) नार्थान्तरसम्पादनायेति यावत् ।

व्युत्पत्तिः—पुरुषेषु अधमाः स० तत्पु० । सृजधातोः क्ते सृष्टः ।

भावार्थः—वे नीच पुरुष इस लोक तथा परलोक दोनोंही में सुख नहीं प्राप्त करते । हे सञ्जय ! इस सृष्टि में क्षत्रियों को युद्ध तथा विजय के लिए ही ब्रह्मा ने बनाया ॥ १३ ॥

न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम ।
यदमित्रान्न् वशे कृत्वा क्षत्रियः सुखमेधते ॥ १४ ॥

पदच्छेदः—न, शक्रभवने, पुण्ये, दिवि, तद्, विद्यते, सुखम्, यत्, अमित्रान्, वशे, कृत्वा, क्षत्रियः, सुखम्, एधते ।

अन्वयः—तत्, सुखम्, पुण्ये, शक्रभवने, दिवि, च, न विद्यते, यत्, क्षत्रियः, अमित्रान् वशे, कृत्वा, सुखम्, एधते ।

व्याख्या—तत् ( तादृशम् ) सुखम्, ( आनन्दम् ) पुण्ये (पवित्रे) शक्रभवने ( इन्द्रनिकेतने ) दिवि ( स्वर्गे ) च न विद्यते ( वर्तते ) यत् ( यादृशम् ) क्षत्रियः ( उत्तमक्षत्रियः ) अमित्रान् ( शत्रून् ) वशे ( स्ववशे ) कृत्वा ( विधाय ) सुखम् ( आनन्दम् ) एधते ( लभते ) इति ।

व्युत्पत्तिः—शक्रस्य भवनं शक्रभवनं तस्मिन् ( ष० त० ) । न मित्राः तान् ।

भावार्थः—वैसा सुख इन्द्रभवन तथा स्वर्ग में भी नहीं मिलता जैसा कि वीर क्षत्रिय अपने शत्रुओं को जीतकर प्राप्त करता है ॥१४॥

मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून् प्रतिजिगीषया ॥१५॥

पदच्छेदः—मन्युना, दह्यमानेन, पुरुषेण, मनस्विना, निकृतेन, इह, बहुशः, शत्रून्, प्रतिजिगीषया ।

अन्वयः—निकृतेन, मनस्विना, पुरुषेण, शत्रून्, प्रतिजिगीषया, इह, बहुशः, मन्युना, दह्यमानेन ।

व्याख्या—निकृतेन ( अपकृतेन ) मनस्विना ( स्वाभिमानिना ) पुरुषेण ( जनेन ) शत्रून् ( रिपून् ) प्रतिजिगीषया ( प्रस्थातव्यमेवेति इच्छया ) इह ( संसारे ) बहुशः ( अनेकशः ) मन्युना ( क्रोधेन ) दह्यमानेन ( भस्मसाद्भवता ) चेष्टयत एवेति शेषः ।

व्युत्पत्तिः—बहुभिः प्रकारैः इति बहुशः, "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति शस्। जेतुमिच्छा जिगीषा तया।

भावार्थः—समझदार पुरुष शत्रुओं से अपमानित होकर भी क्रोध से जलता हुआ शत्रु के प्रति चढ़ाई करने की चेष्टा करता ही है ॥१५॥

आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत्? ॥१६॥

पदच्छेदः—आत्मानम्, वा, परित्यज्य, शत्रुम्, वा, विनिपात्य, च, अतः, अन्येन, प्रकारेण, शान्तिः, अस्य, कुतः, भवेत्।

अन्वयः—आत्मानम्, परित्यज्य, वा, शत्रुम्, च, विनिपात्य, वा, अतः, अन्येन, प्रकारेण, अस्य, शान्तिः, कुतः, भवेत्।

व्याख्या—आत्मानम (स्वम्) परित्यज्य (स्वदेहं विसर्ज्य) वा शत्रुम् (वैरिणम्) च विनिपात्य (विनाश्य) वा. अतः (अस्मात्) अन्येन (भिन्नेन) प्रकारेण (उपायेन) अस्य (वीरस्य) शान्तिः (शमः) कुतः (कस्माद्) भवेत् (जायेत) नोपायान्तरम् तदर्थमस्तीति निष्कर्षः।

व्युत्पत्तिः—परित्यज + क्त्वा (ल्यप्)। विनिपत + णिच् + क्त्वा। अतः (एतद् + तसिल्—एतदोऽन्, नलोपः) कुतः (किम् + ङसि + तसिल्) कुति होः।

भावार्थः—वीरपुरुष या तो युद्ध में अपने को मारकर या शत्रु को ही समाप्त करके चैन लेता है। इससे अतिरिक्त उसे सुखी बनने का कोई उपाय नहीं ॥१६॥

इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥१७॥

पदच्छेदः—इह, प्राज्ञः, हि, पुरुषः, स्वल्पम्, अप्रियम्, इच्छति, यस्य, स्वल्पम्, प्रियम्, लोके, ध्रुवम्, तस्य, अल्पम्, अप्रियम्।

अन्वयः—इह, हि, प्राज्ञः, पुरुषः, स्वल्पम्, अप्रियम्, इच्छति, लोके, यस्य, स्वल्पम्, प्रियम्, तस्य, अल्पम्, अप्रियम्, ध्रुवम्।

व्याख्या—इह (लोके) हि (यतः) प्राज्ञः (बुद्धिमान्) पुरुषः (मनुष्यः) स्वल्पम् (ऐश्वर्यम्) अप्रियम् (अनिष्टम्) इच्छति (मन्यते) लोके (संसारे) यस्य (जनस्य) स्वल्पम् (ऐश्वर्यम्) प्रियम् (प्रियत्वेन गृहीतम्) तस्य (पुरुषविशेषस्य) अल्पम् (तदेव) अप्रियम् (अनर्थकरम्) ध्रुवम् (निश्चितम्) स्यात्। तेन राज्ञाऽल्पसन्तुष्टेन न भाव्यम्, इति भावः।

व्युत्पत्तिः—प्रज्ञ एव प्राज्ञः। न प्रियम् अप्रियम्। सुष्ठु अल्पम् स्वल्पम्।

**भावार्थः**—बुद्धिमान् पुरुष इस लोक में थोड़ी-सी वस्तु को प्रिय नहीं मानता, क्योंकि वही थोड़ी अन्त में उसे दुःखद हो जाती है ॥१७॥

प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥१८॥

**पदच्छेदः**—प्रियाभावात्, च, पुरुषः, न, एव, प्राप्नोति, शोभनम्, ध्रुवम्, च, अभावम्, अभ्येति, गत्वा, गङ्गा, इव, सागरम् ।

**अन्वयः**—पुरुषः, च, प्रियाभावात्, शोभनम्, न, एव, प्राप्नोति, ध्रुवम्, च, सागरम्, गत्वा, गङ्गा, इव, अभावम्, अभ्येति ।

**व्याख्या**—पुरुषः ( मनुष्यः ) च प्रियाभावात् ( प्रियविरहात् ) शोभनम् ( सुखम् ) नैव प्राप्नोति ( लभते ) ध्रुवम् ( निश्चयेन ) च सागरम् । ( समुद्रम् ) गत्वा ( व्रजित्वा ) गङ्गा ( जाह्नवी ) इव ( यथा ) अभावम् ( स्वस्वरूपविलोपम् ) अभ्येति ( गच्छति ) ।

**व्युत्पत्तिः**—प्रियस्य अभावः तस्मात् ( ष. त. ) । अभि + इण् + लट् ।

**भावार्थः**—अपनी प्रियवस्तु के न मिलने से पुरुष को सुख नहीं मिलता किन्तु जैसे गङ्गा समुद्र में जाकर लीन हो जाती है वैसे ही वह भी अन्त में अवश्य ही नष्ट हो जाता है ॥१८॥



## पुत्र उवाच ।

नेयं मतिस्त्वया वाच्या मातः ! पुत्रे विशेषतः ।
कारुण्यमेवाऽत्र पश्य भूत्वेह जडमूकवत् ॥ १९ ॥

**पदच्छेदः**—न, इयम्, मतिः, त्वया, वाच्या, मातः, पुत्रे, विशेषतः, कारुण्यम्, एव, अत्र, पश्य, भूत्वा, इह, जडमूकवत् ।

**अन्वयः**—हे मातः ! विशेषतः, पुत्रे, त्वया, इयम्, मतिः, न वाच्या, इह जडमूकवत्, भूत्वा, अत्र, कारुण्यम्, एव, पश्य ।

**व्याख्या**—हे मातः ! ( हे जननि ! ) विशेषतः ( विशेषेण ) पुत्रे ( सुते ) त्वया ( भवत्या ) इयम् ( एषा ) मतिः ( बुद्धिः ) न वाच्या ( कार्या ) अत्र ( सुते ) जडमूकवत् ( जडवत् मूकवद्वा ) भूत्वा इह ( पुत्रे ) कारुण्यम् (दयाम्) एव ( केवलाम् ) पश्य ( अवलोकय ) नाऽन्यथेति भावः ।

**व्युत्पत्तिः**—विशेषेण इति विशेषतः तृतीयान्तात् तसिल् । जडश्च मूकश्चेति जडमूकौ तद्वत् ।

**भावार्थः**—पुत्र ने कहा कि हे मातः ! तुम्हें तो ऐसी बात कहनी ही नहीं

चाहिए थी, विशेष कर मुझ पुत्र में तो तुम्हें गूँगे और जड़ के समान बन के दया की ही दृष्टि रखनी चाहिए ॥१९॥

मातोवाच ।

अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।
चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥२०॥

**पदच्छेदः**—अतः, मे भूयसी, नन्दिः, यत्, एवम्, अनुपश्यसि, चोद्यम्, माम्, चोदयसि, एतद्, भृशम्, वै, चोदयामि, ते ।

**अन्वयः**—यत्, एवम्, अनुपश्यसि, अतः, मे, भूयसी, नन्दिः, चोद्यम्, माम्, चोदयसि, एतद्, वै, भृशम्, ते, चोदयामि ।

**व्याख्या**—यत् ( यतः ) एवम् ( अमुना प्रकारेण ) अनुपश्यसि ( बुध्यसे ) अतः ( एतस्मात् कारणात् ) मे (मम) भूयसी ( अधिकतरा ) नन्दिः ( प्रसन्नता ) चोद्यम् ( प्रेरणीयाम् ) माम् ( विदुलाम् ) चोदयसि (मातृकर्मणे प्रेरयसि) एतद् वै (अत एव) भृशम् ( अत्यन्तम् ) ते ( त्वाम् ) चोदयामि (साग्रहं युद्धाय प्रेरयामि)।

**व्युत्पत्तिः**—भूयसी-बहोर्लोपो भू च । त्वाम् इत्यस्य ते इति ।

**भावार्थः**—तुम इस प्रकार अपने शरीर पर दया कर मुझे भी कृपा करने की सलाह दे रहे हो इस बात पर मुझे बड़ी प्रसन्नता है । रहा यह कि तुम मुझे कर्तव्यपथ का उपदेश कर रहे हो इस लिए मुझे भी आग्रह सहित तुम्हारा उचित मार्ग सम्बोधित करना पड़ रहा है ॥२०॥

अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृच्छ्रभावितमेव ते ॥२१॥

**पदच्छेदः**—अथ, त्वाम्, पूजयिष्यामि, हत्वा, वै, सर्वसैन्धवान्, अहम्, पश्यामि, विजयम्, कृच्छ्रभावितम्, एव, ते ।

**अन्वयः**—अथ, सर्वसैन्धवान्, हत्वा, वै, त्वाम्, पूजयिष्यामि, अहम्, ते, विजयम्, कृच्छ्रभावितम्, एव, पश्यामि ।

**व्याख्या**—अथ ( अनन्तरम् ) सर्वसैन्धवान् ( शत्रुवर्गान् ) हत्वा (विनाश्य) वै यदाऽऽगच्छसि तदा त्वाम् ( सञ्जयम् ) पूजयिष्यामि ( सम्मानयिष्यामि ) अहम् ( विदुला ) ते ( तव ) विजयम् ( जयम् ) कृच्छ्रभावितम् ( दुःखेनापि सम्पन्नम् ) एव पश्यामि ( द्रष्टुमिच्छामि ) ।

**व्युत्पत्तिः**—सर्वे च ते सैन्धवाः तान् । कृच्छ्रेण भावितम् ।

**भावार्थः**—तू सिन्धुदेश के सभी वीरों को मारकर कष्ट से विजय पावेगा इस बात को जब मैं देखूँगी तब तुम्हारे ऊपर बड़ी प्रसन्न होऊँगी ॥२१॥

## पुत्र उवाच ।

अकोशस्यासहायस्य कुतः सिद्धिर्जयो मम ।
इत्यवस्थां विदित्वैतामात्मनाऽऽत्मनि दारुणाम् ॥२२॥

पदच्छेदः—अकोशस्य, असहायस्य, कुतः, सिद्धिः, जयः, मम, इति, अवस्थाम्, विदित्वा, एताम्, आत्मना, आत्मनि, दारुणाम् ।

अन्वयः—अकोशस्य, असहायस्य, मम, कुतः, सिद्धिः ( कुतो वा ) जयः, इति, आत्मनि, एताम्, दारुणाम्, अवस्थाम्, आत्मना, विदित्वा ( राज्याद् भावो निवृत्तः इति परेणान्वयः ) ।

व्याख्या—अकोशस्य ( कोशहीनस्य ) असहायस्य ( सहायरहितस्य ) मम ( सञ्जयस्य ) कुतः ( कथम् ) सिद्धिः (सफलता) कुतो वा जयः ( विजयः ) इति ( एवम् ) विदित्वा आत्मनि ( हृदये ) एताम् ( इमाम् ) दारुणाम् ( भयङ्करीम् ) अवस्थाम् ( दशाम् ) विदित्वा ( ज्ञात्वा ) राज्याद् भावो निवृत्त इति ।

व्युत्पत्तिः—नास्ति कोशो यस्य, नास्ति सहायो यस्य तस्य इति उभयत्र बहुव्रीहिः ।

भावार्थः—सञ्जय ने कहा कि हे माता ! कोशहीन, सहायहीन मुझ अकिञ्चन का विजय कैसे होगा ? इस बात को आत्मा में समझ कर ही मैंने राज्य की इच्छा छोड़ी है ॥२२॥

राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः ।
ईदृशं भवती कञ्चिदुपायमनुपश्यति ॥२३॥

पदच्छेदः—राज्यात्, भावः, निवृत्तः, मे, त्रिदिवात्, इव, दुष्कृतः, ईदृशम्, भवती, कञ्चित्, उपायम्, अनुपश्यसि ।

अन्वयः—दुष्कृतः, त्रिदिवात्, इव, मे, राज्यात्, भावः, निवृत्तः, भवती, ईदृशम्, कञ्चित्, उपायम्, अनुपश्यति ।

व्याख्या—दुष्कृतः ( पापिनः ) त्रिदिवात् ( स्वर्गात् ) इव ( यथा ) मे ( मम ) राज्यात् ( राज्यलाभात् ) भावः ( हृदयम् ) निवृत्तः ( न्यवर्तत ) भवती ( श्रीमती ) ईदृशम् ( एतादृशम् ) कञ्चित् उपायम् ( साधनम् ) अनुपश्यति ? ( जानाति ? ) चेत् कथय ।

व्युत्पत्तिः—दुःकुर्वन्ति इति दुष्कृतः ।

भावार्थः—जैसे पापी स्वर्ग से वैसे ही मेरा भी हृदय राज्य से निवृत्त हो गया । अगर आप कोई उपाय जानती हों तो बतलाइए ॥२३॥

तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥२४॥

पदच्छेद:—तत्, मे, परिणतप्रज्ञे, सम्यक्, प्रब्रूहि, पृच्छते, करिष्यामि, हि, तत्, सर्वम्, यथावत्, अनुशासनम् ।

अन्वयः—हे परिणतप्रज्ञे ! तत्, पृच्छते, मे, सम्यक्, प्रब्रूहि, हि, तत्, सर्वम्, अनुशासनम्, यथावत्, करिष्यामि ।

व्याख्या—हे परिणतप्रज्ञे ! ( विशेषबुद्धे ! ) तत् ( पूर्वोक्तम् ) पृच्छते ( जिज्ञासते ) मे ( मह्यम् ) सम्यक् ( यथावत् ) प्रब्रूहि ( वद ) हि ( यतः ) तत् ( त्वदुक्तम् ) सर्वम् ( सम्पूर्णम् ) अनुशासनम् ( आदेशम् ) यथावत् ( यथार्थम् ) करिष्यामि ( सम्पादयिष्यामि ) ।

व्युत्पत्तिः—प्ररिणता प्रज्ञा यस्याः सा तत्सम्बुद्धौ ।

भावार्थः—हे विशेष बुद्धिवाली माता ! मैं जो पूछ रहा हूँ उस विषय में तुम अपनी आज्ञा अच्छी तरह करो । हम तुम्हारे आदेश का ठीक २ पालन करेंगे ॥२४॥

## मातोवाच ।

पुत्र ! नात्माऽवमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ॥२५॥

पदच्छेद:—पुत्र, न, आत्मा, अवमन्तव्यः, पूर्वाभिः, असमृद्धिभिः, अभूत्वा, हि, भवन्ति, अर्थाः, भूत्वा, नश्यन्ति, च, अपरे, अमर्षेण, एव, च, अपि, अर्थाः, न, आरब्धव्याः, सुबालिशैः ।

अन्वयः—हे पुत्र ! पूर्वाभिः, असमृद्धिभिः, आत्मा, न, अवमन्तव्यः, हि, अर्थाः, अभूत्वा, भवन्ति, अपरे, भूत्वा, च, नश्यन्ति, सुबालिशैः, अमर्षेण, एव, च, अपि, अर्थाः, न, आरब्धव्याः ।

व्याख्या—हे पुत्र ! ( हे सुत ! ) पूर्वाभिः ( प्राक्कालोद्भवाभिः ) असमृद्धिभिः ( दरिद्रताभिः ) आत्मा ( जीवात्मा ) न, अवमन्तव्यः ( अवमाननीयः ) हि ( यतः ) अर्थाः ( धनानि ) अभूत्वा ( अनुत्पद्य ) भवन्ति ( जायन्ते ) अपरे ( अन्ये ) भूत्वा ( उत्पद्य ) च नश्यन्ति ( प्रणश्यन्ति ) सुबालिशैः ( मूर्खैः ) अमर्षेण ( क्रोधेन ) एव च अपि अर्थाः ( धर्माद्याः ) न आरब्धव्याः ( पण्डितैस्तु आदरेण आरब्धव्या एव ) ।

भावार्थः—विदुला ने कहा कि हे पुत्र ! अपने पास पहले ही से धन-सम्पत्ति न हो तो अपनी आत्मा को न धिक्कारना चाहिए क्योंकि धन पहले नहीं होते

पीछे आजाते हैं, कितने ही धन आकर भी नष्ट हो जाते हैं, अतः मनुष्य को दाह के कारण अधर्म से धन का उद्योग नहीं करना चाहिए । बुद्धिमानों को तो सदैव आदर से धर्माचरण के साथ धन कमाना चाहिए ॥२५॥

सर्वेषां कर्मणां तात ! फले नित्यमनित्यता ।
अनित्यमिति जानन्तो न भवन्ति भवन्ति च ॥२६॥

**पदच्छेदः**—सर्वेषाम्, कर्मणाम्, तात, फले, नित्यम्, अनित्यता, अनित्यम्, इति, जानन्तः, न, भवन्ति, भवन्ति, च ।

**अन्वयः**—हे तात !, सर्वेषाम्, कर्मणाम्, फले, नित्यम्, अनित्यता, अनित्यम्, इति, जानन्तः, न, भवन्ति, भवन्ति, च ।

**व्याख्या**—हे तात ! (हे पुत्र !) सर्वेषाम् (निखिलानाम्) कर्मणाम् (कर्त्तव्यानाम्) फले (परिणामे) नित्यम् (अवश्यम्) अनित्यता (विनाशिता) अनित्यम् (विनाशि) इति (एवम्) जानन्तः (विदन्तः) पण्डिताः आरभमाणा न भवन्ति (कदाचित् ऐश्वर्यम् न लभन्ते) भवन्ति च (कदाचित् सिद्धार्थाः) ।

**व्युत्पत्तिः**—नित्यस्य भावः नित्यता, न नित्यता अनित्यता । न नित्यम् अनित्यम् ।

**भावार्थः**—हे पुत्र ! सभी कर्मों का फल नित्य ही अनित्य होता है । इस अनित्यता को जानते हुए भी पण्डित लोग कर्म किया ही करते हैं, उनका फल उन्हें कभी मिलता है कभी नहीं भी ॥२६॥

अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ।
ऐकगुण्यमनीहायामभावः कर्मणां फलम् ॥२७॥

**पदच्छेदः**—अथ, ये, न, एव, कुर्वन्ति, न, एव, जातु, भवन्ति, ते, ऐकगुण्यम्, अनीहायाम्, अभावः, कर्मणाम्, फलम् ।

**अन्वयः**—अथ, ये, कुर्वन्ति, एव, न, ते, जातु, न भवन्ति, अनीहायाम्, कर्मणाम्, फलम्, अभावः ।

**व्याख्या**—अथ (अथो) ये (पुरुषाः) कुर्वन्ति एव न (कर्मैव नारभन्ते) ते (अनारम्भाः जनाः) जातु (कदाचिदपि) न भवन्ति (इष्टफलभाजो न भवन्ति) अनीहायाम् (अचेष्टायाम्) कर्मणाम् (कर्त्तव्यानाम्) फलम् (परिणामः) अभावः (असत्ता) एवेति निष्कर्षः ।

**व्युत्पत्तिः**—न ईहा अनीहा तस्याम् । न भावः अभावः ।

**भावार्थः**—जो लोग कार्य का प्रारम्भ ही नहीं करते उन्हें अपने इष्टफल की प्राप्ति नहीं होती । क्योंकि अचेष्टा का फलही सदैव अभाव हुआ करता है ॥२७॥

अथ द्वैगुण्यमीहायां फलं भवति वा न वा।
यस्य प्रागेव विदिता सर्वार्थानामनित्यता ॥२८॥

पदच्छेदः—अथ, द्वैगुण्यम्, ईहायाम्, फलम्, भवति, वा, न, वा, यस्य, प्राक्, एव, विदिता, सर्वार्थानाम्, अनित्यता।

अन्वयः—अथ, ईहायाम्, द्वैगुण्यम्, फलम्, भवति, वा, न, वा, यस्य, प्राक्, एव, सर्वार्थानाम्, अनित्यता, विदिता।

व्याख्या—अथ ( अथो ) ईहायाम् ( चेष्टायाम् ) द्वैगुण्यम् ( गुणद्वयम् ) यत् फलम् ( परिणामः ) भवति ( सम्पद्यते ) वा न वा ( कदाचित् भवति कदाचिच्च नेत्यर्थः ) यस्य ( विज्ञस्य ) प्राक् ( पूर्वम् ) एव सर्वार्थानाम् ( सर्वप्रयोजनानाम् ) अनित्यता ( विनाशिता ) विदिता ( ज्ञाता ) इति अभावनिश्चयापेक्षया पाक्षिकफलसद्भाववती प्रवृत्तिरेव श्रेष्ठेति भावः।

व्युत्पत्तिः—ईहनम् ईहा, ईहधातोः "गुरोश्च हलः" इत्यकारप्रत्यये स्त्रीत्वे ईहा। सर्वे च ते अर्थाः तेषाम्। न नित्यः अनित्यः तस्य भावः अनित्यता।

भावार्थः—चेष्टा करने पर दो प्रकार के फल होते हैं, कभी कार्य की सिद्धि तथा कभी नहीं। परन्तु गम्भीर पुरुष पहले से ही यह जानते रहते हैं कि इस संसार में सभी कार्य अनित्य हैं फिर भी कार्य में लगे रहते हैं ॥२८॥

नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज !।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ॥२९॥

पदच्छेदः—नुदेत्, वृद्धिसमृद्धी, सः, प्रतिकूले, नृपात्मज, उत्थातव्यम्, जागृतव्यम, योक्तव्यम्, भूतिकर्मसु।

अन्वयः—हे नृपात्मज !, सः, प्रतिकूले, वृद्धिसमृद्धी, नुदेत्, उत्थातव्यम्, जागृतव्यम्, भूतिकर्मसु, योक्तव्यम् ( अव्यथैरिति परेणान्वयः )।

व्याख्या—हे नृपात्मज ! ( हे राजपुत्र ! ) सः ( बुद्धिमान् पुरुषः ) प्रतिकूले ( विरुद्धे ) वृद्धिसमृद्धी ( पीडैश्वर्ये ) नुदेत् ( दूरीकुर्यात् ) अर्थात् आत्मनः पीडाम् परस्य ऐश्वर्यं च नुदेदित्यर्थः। उत्थातव्यम् ( उत्थानीयम् ) जागृतव्यम् ( जागरणं कर्तव्यम् ) भूतिकर्मसु ( भूतिकार्येषु ) योक्तव्यम ( सज्जीभवितव्यम् ) अव्यथैरिति योजनीयम्।

व्युत्पत्तिः—नृपस्य आत्मजः तत्सम्बुद्धौ। वृद्धिश्च समृद्धिश्च वृद्धिसमृद्धी। भूतीनां कर्माणि तेषु। वृधु हिंसायाम् इति क्तिनि वृद्धिशब्दः पीडेत्यर्थः।

भावार्थः—हे राजपुत्र ! काम करते समय वह वीर प्रसन्न गम्भीरता के साथ अपनी हानि तथा शत्रु की समृद्धि दोनों को रोकता है। अतः चित्त में किसी

प्रकार का कष्ट न रख कर उठना चाहिए, जागना चाहिए तथा भूति कार्यों में युक्त होना चाहिए ॥२९॥

भविष्यतीत्येव मनः कृत्वा सततमव्यथैः।
मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह ॥३०॥

**पदच्छेदः**—भविष्यति, इति, एव, मनः, कृत्वा, सततम्, अव्यथैः, मङ्गलानि, पुरस्कृत्य, ब्राह्मणान्, च, ईश्वरैः, सह।

**अन्वयः**—अव्यथैः, ईश्वरैः, सह, ब्राह्मणान्, मङ्गलानि, च, पुरस्कृत्य, सततम्, भविष्यति, इति, एव, मनः, कृत्वा ( योक्तव्यम् इत्यादिपूर्वेणान्वयः )।

**व्याख्या**—अव्यथैः, ( व्यथाशून्यैः वीरैः ) ईश्वरैः ( प्रभुभिः देवैः ) सह ब्राह्मणान् ( द्विजान् ) नमस्कृत्य मङ्गलानि ( शिवानि ) च पुरस्कृत्य ( विधाय ) सततम् ( निरन्तरम् ) भविष्यति ( यदहं करोमि तदवश्यं सफलं भविष्यति ) इति ( एवम् ) एव मनः ( चेतः ) कृत्वा योक्तव्यमित्यर्थः।

**व्युत्पत्तिः**—न व्यथा येषां ते अव्यथाः तैः। ईष्टे इतीश्वराः तैः।

**भावार्थः**—अपने हृदय में किसी प्रकार की दुर्बलता न रख देवताओं तथा ब्राह्मणों की उचित पूजा कर मङ्गल के प्रयोगों द्वारा मेरा कार्य सफल होगा ही ऐसे निश्चय से कार्य करते रहें ॥३०॥

प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक!।
अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥३१॥

**पदच्छेदः**—प्राज्ञस्य, नृपतेः, आशु, वृद्धिः, भवति, पुत्रक, अभिवर्तति, लक्ष्मीः, तम्, प्राचीम्, इव, दिवाकरः।

**अन्वयः**—हे पुत्रक!, प्राज्ञस्य, नृपतेः, आशु, वृद्धिः, भवति, दिवाकरः, प्राचीम्, इव, लक्ष्मीः, तम्, अभिवर्तति।

**व्याख्या**—हे पुत्रक! ( हे सुत! ) प्राज्ञस्य ( बुद्धिमतः ) नृपतेः ( नृपस्य ) आशु ( शीघ्रम् ) वृद्धिः ( अभ्युदयः ) भवति ( जायते ) दिवाकरः ( सूर्यः ) प्राचीम् ( पूर्वाम् दिशम् ) इव ( यथा ) लक्ष्मीः ( श्रीः ) तम् ( नृपविशेषम् ) अभिवर्तति ( अधितिष्ठति )।

**व्युत्पत्तिः**—नृणां पतिः नृपतिः। अभिवर्तति अत्र आत्मनेपदाभावः, आर्षत्वात्।

**भावार्थः**—हे पुत्र! बुद्धिमान् राजा की बहुत जल्दी वृद्धि होती है। जैसे सूर्य पूर्व दिशा को वैसे ही लक्ष्मी उस राजा को चारों तरफ से घेर कर बैठ जाती है ॥३१॥

निदर्शनान्युपायाँश्च बहून्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ॥३२॥

पदच्छेद:—निदर्शनानि, उपायान्, च, बहूनि, उद्धर्षणानि, च, अनुदर्शित-रूपः, असि, पश्यामि, कुरु, पौरुषम् ।

अन्वय:—बहूनि, निदर्शनानि, उद्धर्षणानि, उपायान्, च, अनुदर्शितरूपः, असि, पौरुषम्, कुरु, पश्यामि ।

व्याख्या—बहूनि ( अनेकानि ) निदर्शनानि ( दृष्टान्तानि ) उद्धर्षणानि ( प्रोत्साहकानि ) च अनुदर्शितरूपः ( परिदर्शितलोकवृत्तान्तः ) असि ( जातोऽसि ) पौरुषम् ( पुरुषार्थम् ) कुरु ( विधेहि ) पश्यामि ( अवलोकयामि ) ।

व्युत्पत्ति:—अनुदर्शितं रूपं यस्य सः अनुदर्शितरूपः ( बहु० ) ।

भावार्थ:—हे पुत्र ! मैंने तुम्हारे उत्साह को बढ़ाने के लिए बहुत से उदाहरण तथा प्रोत्साहक वाक्य सुनाये हैं, आशा है कि अब तू पुरुषार्थ करेगा। मैं तुझे तुम्हारा स्वरूप भी सुनाती हूँ ॥३२॥

पुरुषार्थमभिप्रेतं समाहर्त्तुमिहाऽर्हसि ।
क्रुद्धान् लुब्धान् परिक्षीणानवलिप्तान् विमानितान् ॥३३॥

पदच्छेद:—पुरुषार्थम्, अभिप्रेतम्, समाहर्त्तुम्, इह, अर्हसि, क्रुद्धान्, लुब्धान्, परिक्षीणान्, अवलिप्तान्, विमानितान् ।

अन्वय:—इह, अभिप्रेतम्, पुरुषार्थम्, समाहर्त्तुम्, अर्हसि, क्रुद्धान्, लुब्धा-न्, परिक्षीणान्, अवलिप्तान्, विमानितान् ( युक्त उपधारय इति परेणान्वयः ) ।

व्याख्या—इह ( संसारे ) अभिप्रेतम् ( अभीष्टम् ) पुरुषार्थम् ( पौरुषम् ) समाहर्त्तुम् ( संग्रहीतुम् ) अर्हसि ( योग्योऽसि ) क्रुद्धान् ( क्रोधशीलान् ) लुब्धान् ( लोभिनः ) परिक्षीणान् ( क्षीणसर्वस्वान् ) अवलिप्तान् ( उग्रदर्पान् ) विमानि-तान् ( अपमानितान् ) युक्त उपधारय इत्युत्तरेणाऽन्वयः ।

व्युत्पत्ति:—अभि + प्र + इण् + त । सम् + आ + हृ + तुमुन् ।

भावार्थ:—हे पुत्र ! अब इस संसार में तुझे अभीष्ट पुरुषार्थ करना चाहिए। जो पुरुष क्रोधी, लोभी, शत्रुओं से अत्यन्त क्षीण, शत्रुओं से अपमानित हों उन्हें संगृहीत करो ॥३३॥

स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ।
एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ॥३४॥

पदच्छेद:—स्पर्धिनः, च, एव, ये, केचित्, तान्, युक्तः, उपधारय, एतेन, त्वम्, प्रकारेण, महतः, भेत्स्यसे, गणान् ।

अन्वयः—ये, केचित्, स्पर्धिनः, च, एव, तान्, युक्तः, उपधारय, त्वम्, एतेन, प्रकारेण, महतः, गणान्, भेत्स्यसे ।

व्याख्या—ये ( अन्ये ) केचित् ( नृपाः ) स्पर्धिनः ( स्पर्धावन्तः ) च एव तान् ( सर्वान् ) युक्तः ( समाहितः सचेताः ) उपधारय ( संगृहाण विधिवत् ) त्वम् ( सञ्जयः ) एतेन ( पूर्वोक्तेन ) प्रकारेण ( उपायेन ) महतः ( प्रबलान् ) गणान् ( शत्रुसमूहान् ) भेत्स्यसे ( नाशयिष्यसि ) ।

व्युत्पत्तिः—स्पर्द्धन्ते इति स्पर्द्धिनः तान् ।

भावार्थः—अन्य जो स्पर्धा ( डाह ) करनेवाले राजा हैं उन सब का भी संग्रह करो । ऐसा करने में तू बड़े से बड़े शत्रुओं का भी भेदन साधारण श्रम से कर सकते हो ॥३४॥

महावेग इवोद्धूतो मातरिश्वा बलाहकान् ।
तेषामग्रप्रदायी स्याः कल्पोत्थायी प्रियंवदः ॥३५॥

पदच्छेदः—महावेगः, इव, उद्धूतः, मातरिश्वा, बलाहकान्, तेषाम्, अग्रप्रदायी, स्याः, कल्पोत्थायी, प्रियंवदः ।

अन्वयः—महावेगः, उद्धूतः, मातरिश्वा, बलाहकान्, इव, तेषाम्, अग्रप्रदायी, कल्पोत्थायी, प्रियंवदः, स्याः ।

व्याख्या—महावेगः ( अतिवेगवान् ) उद्धूतः ( उत्पन्नः ) मातरिश्वा (वायुः) बलाहकान् ( मेघान् ) इव ( यथा ) तथा त्वं भेत्स्यसे इति पूर्वान्वयी । एवं च तेषाम् क्रुद्धादीनां ( राज्ञाम् ) अग्रप्रदायी ( भक्तवेतनादिकं सर्वमविलम्बेन प्रदद्याः ) कल्पोत्थायी ( प्रातःसमुत्थानशीलः ) प्रियंवदः ( प्रियभाषी ) स्याः ( जायेथाः ) ।

व्युत्पत्तिः – महान् वेगो यस्य ( बहु० ) । अग्रे प्रददाति इति अग्रप्रदायी । कल्पे उत्तिष्ठति इति कल्पोत्थायी । प्रियं वदतीति प्रियंवदः ।

भावार्थः—बड़े वेगवाले वायु जैसे बादल को फाड़ देते हैं वैसे ही शत्रुदल का भेदन कर सकते हो । उन राजाओं को भत्ता तथा तनख्वाह आगे से ही देकर मीठी बातें करके कार्य में सन्नद्ध हो जाओ ॥३५॥

ते त्वां प्रियं करिष्यन्ति पुरोधास्यन्ति च ध्रुवम् ।
यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।
तदैवाऽस्मादुद्विजेत सर्पाद्वेश्मगतादिव ॥३६॥

पदच्छेदः—ते, त्वाम्, प्रियम्, करिष्यन्ति, पुरः, धास्यन्ति, च, ध्रुवम्, यदा, एव, शत्रुः, जानीयात्, सपत्नम्, त्यक्तजीवितम्, तदा, एव, अस्मात्, उद्विजेत, सर्पाद्वेश्मगतात्, इव ।

अन्वयः—ते, त्वाम्, प्रियम्, करिष्यन्ति, ध्रुवम्, च, पुरोधास्यन्ति, शत्रुः, यदा, एव, सपत्नम्, त्यक्तजीवितम्, जानीयात्, तदा, एव, वेश्मगतात्, सर्पात्, इव, तस्मात्, उद्विजेत।

व्याख्या—ते ( सम्मानिताः क्षत्रियाः ) त्वाम् ( सञ्जयम् लक्ष्यीकृत्य ) प्रियम् ( हितम् ) करिष्यन्ति ( विधास्यन्ति ) ध्रुवम् ( निश्चितं च ) पुरोधास्यन्ति ( अग्रे व्रजिष्यन्ति ) शत्रुः ( अरिः ) यदा ( यस्मिन् काले ) एव सपत्नम् ( शत्रुम् ) त्यक्तजीवितम् ( त्यक्तप्राणम् ) जानीयात् ( बुध्येत ) तदा एव ( तस्मिन् काले ) वेश्मगतात् ( गृहगतात् ) सर्पात् ( व्यालात् ) इव ( यथा ) तस्मात् ( शत्रोः ) उद्विजेत् ( उद्वेगं कुर्यात् )।

व्युत्पत्तिः—त्यक्तं जीवितं येन तम् ( बहुव्री० )। वेश्मनि गतः तस्मात्।

भावार्थः—वे सम्मानित क्षत्रिय लोग तुम्हारे हित में अग्रसर रहेंगे। जब शत्रु जान लेता है कि हमारा विरोधी प्राणपर्यन्त युद्ध में लड़ेगा तो वह इस तरह घबरा जाता है जैसे स-सर्पगृह से गृहस्वामी घबरा जाता है ॥३६॥

ते विदित्वा पराक्रान्तं वशेन कुरुते यदि।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥३७॥

पदच्छेदः—तम्, विदित्वा, पराक्रान्तं, वशे, न, कुरुते, यदि, निर्वादैः, निर्वदेत्, एनम्, अन्ततः, तद्, भविष्यति।

अन्वयः—यदि, तम्, पराक्रान्तम्, विदित्वा, वशे, न, कुरुते ( तर्हि ) निर्वादैः, एनम्, निर्वदेत्, अन्ततः, तद्, भविष्यति।

व्याख्या—यदि ( चेत् ) तम् ( स्वशत्रुम् ) पराक्रान्तम् ( विशेषपराक्रमशालिनम् ) विदित्वा ( ज्ञात्वा ) वशे ( स्वाधीने ) न कुरुते ( विधत्ते ) तर्हि निर्वादैः ( परिनिष्ठितैः दूतैः ) एनम् ( शत्रुम् ) निर्वदेत् ( वशीकुर्यात् ) अन्ततः ( अन्तेगत्वा केनचिदुपायेन ) अवश्यम् तद् ( शत्रुवशीकरणम् ) भविष्यति ( सम्पत्स्यते ) न तत्र सन्देहः।

व्युत्पत्तिः—पराक्रम + त। निर्वादः स्यात् परीवादे परिनिष्ठितवादयोः इति विश्वः।

भावार्थः—जब युद्ध में शत्रु को विशेष पराक्रमी जान ले तो उसे वश में करने का उपाय सोचे, यदि दूसरी तरह न हो सके तो चतुर दूत भिड़ावे। सामादि चतुर्विध उपायों को काम में लेते रहने से अवश्य ही सफलता प्राप्त होती है, किसी प्रकार का सन्देह नहीं ॥ ३७ ॥

निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति।
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ॥३८॥

पदच्छेदः—निर्वादात्, आस्पदम्, लब्ध्वा, धनवृद्धिः, भविष्यति, धन-वन्तम्, हि, मित्राणि, भजन्ते, च, आश्रयन्ति, च।

अन्वयः—निर्वादात्, आस्पदम्, लब्ध्वा, धनवृद्धिः, भविष्यति, हि, धन-वन्तम्, मित्राणि, भजन्ते, आश्रयन्ति, च।

व्याख्या—निर्वादात् (परिनिष्ठिततया) आस्पदम् (स्थानम्) लब्ध्वा (प्राप्य) धनवृद्धिः (ऐश्वर्याभिवृद्धिः) भविष्यति (सम्पत्स्यते) हि (यतः) धनवन्तम् (धनिनम्) मित्राणि (सुहृदः) भजन्ते (सेवन्ते) आश्रयन्ति (आश्रयं मन्वते) च।

व्युत्पत्तिः—आस्पदम् प्रतिष्ठायाम्। लभ + क्त्वा = लब्ध्वा।

भावार्थः—पूर्वप्रकार से शत्रु को वश में कर लेने से धन की वृद्धि होती है। धनवान् को ही मित्र भी मानते हैं तथा आश्रय लेते हैं॥ ३८॥

स्खलितार्थं पुनस्तानि सन्त्यजन्ति च बान्धवाः।
अप्यस्मिन्नाश्वसन्ते च जुगुप्सन्ते च तादृशम्॥३९॥

पदच्छेदः—स्खलितार्थम्, पुनः, तानि, सन्त्यजन्ति, च, बान्धवाः, अपि, अस्मिन्, न, आश्वसन्ते, च, जुगुप्सन्ते, च, तादृशम्।

अन्वयः—पुनः, च, तानि, स्खलितार्थम्, सन्त्यजन्ति, अपि, च, बान्धवाः, अस्मिन्, न, आश्वसन्ते, तादृशम्, च, जुगुप्सन्ते।

व्याख्या—पुनः (भूयः) च तानि (मित्राणि) स्खलितार्थम् (गतधनम्) सन्त्यजन्ति (परित्यजन्ति) अपि च बान्धवाः (कुटुम्बिनः) अस्मिन् (निर्धने) न आश्वसन्ते (न विश्वासं स्थापयन्ति) तादृशम् (निर्धनत्वाद् दीनम्) च जुगुप्सन्ते (निन्दन्ति)।

व्युत्पत्तिः—स्खलितः अर्थः यस्मात् तम् बहुव्री०। गुप् + सन् + लट्।

भावार्थः—धनहीन व्यक्ति को मित्र भी छोड़ देते हैं, कुटुम्बी लोग उसमें विश्वास नहीं करते उल्टे उसकी निन्दा करने लग जाते हैं॥३९॥

शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति।
अतः सम्भाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति॥४०॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने पञ्चत्रिंशदधिकशततमोऽध्यायः।

पदच्छेदः—शत्रुम्, कृत्वा, यः, सहायम्, विश्वासम्, उपगच्छति, अतः, सम्भाव्यम्, एव, एतत्, यत्, राज्यम्, प्राप्नुयात्, इति।

अन्वयः—यः, शत्रुम्, सहायम्, कृत्वा, विश्वासम्, उपगच्छति, अतः, सम्भाव्यम्, एव, एतद्, यत्, राज्यम्, प्राप्नुयात्, इति।

व्याख्या—यः ( राजा ) शत्रुम् ( वैरिणम् ) सहायम् ( सहायकम् ) कृत्वा ( विधाय ) विश्वासम् ( विस्रम्भम् ) उपगच्छति ( प्राप्नोति ) अतः ( एवंरूपेण ) सम्भाव्यम् ( सम्भवमात्रम् ) एव एतद् ( इदम् ) यत् राज्यम् ( राजसिंहासनम् ) प्राप्नुयात् ( लभेत ) इति। अर्थात् राज्ञः सेवको भूत्वा राज्यप्राप्तिः स्यादिति तु असम्भवमेव।

व्युत्पत्तिः—सम्भवितुं योग्यं सम्भाव्यम्। सम्-भू + णिच् + यत्।

भावार्थः—जो राजा शत्रु की सेवा करके ऐसी आशा करे कि इसे राज्य मिलेगा वह केवल असम्भव की बात सोच रहा है। विना पुरुषार्थ किसी को भी राज्य नहीं मिलता ॥ ४० ॥

इति महाभारतीये विदुलोपाख्याने आचार्यश्रीराजनारायणशास्त्रिशुक्लरचितायां प्रभाटीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः।

### मातोवाच।

नैव राज्ञा दरः कार्यो जातु कस्याञ्चिदापदि।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १ ॥

पदच्छेदः—न, एव, राज्ञा, दरः, कार्यः, जातु, कस्याञ्चित्, आपदि, अथ, चेत्, अपि, दीर्णः, स्यात्, न, एव, वर्तेत, दीर्णवत्।

अन्वयः—कस्याञ्चित्, आपदि ( अपि ) जातु, राज्ञा, दरः, न, कार्यः, अथ, चेत्, दीर्णः, अपि, स्यात्, दीर्णवत्, न, एव, वर्त्तेत।

व्याख्या—कस्याञ्चित् ( विशिष्टायाम् ) आपदि ( विपत्तौ ) अपि जातु ( कदाचित् ) राज्ञा ( नृपतिना ) दरः ( भयम् ) न कार्यः ( कार्यम् ) अथ ( अनन्तरम् ) चेत् ( यदि ) दीर्णः ( भीतः ) अपि स्यात् ( भवेत् ) तथापि दीर्णवत् ( भीतवत् ) न एव वर्त्तेत ( व्यवहरेत् ) बहिः प्रदर्शनं तस्य न कुर्यादित्यर्थः।

व्युत्पत्तिः—दृ भये इति धातोः क्ते रदाभ्याम् नत्वम्।

भावार्थः—विदुला ने कहा कि राजा को किसी बड़ी से बड़ी आपत्ति में भी

भय न करना चाहिए । यदि किसी प्रकार भय का कारण भी उपस्थित हो जाय तो भी दिखावटी रूप में वह बात सब को मालूम न पड़ने पावे ॥ १ ॥

दीर्णं हि दृष्ट्वा राजानं सर्वमेवाऽनुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतीः ॥ २ ॥

पदच्छेदः—दीर्णम्, हि, दृष्ट्वा, राजानम्, सर्वम्, एव, अनुदीर्यते, राष्ट्रम्, बलम्, अमात्याः, च, पृथक्, कुर्वन्ति, ते, मतीः ।

अन्वयः—हि, दीर्णम्, राजानम्, दृष्ट्वा, राष्ट्रम्, बलम्, अमात्याः, च, सर्वम्, एव, अनुदीर्यते, ते, च, मतीः, पृथक्, कुर्वन्ति ।

व्याख्या—हि ( यतः ) दीर्णम् ( भीतम् ) राजानम् ( नृपम् ) दृष्ट्वा ( अवलोक्य ) राष्ट्रम् ( राज्यम् ) बलम् ( सैन्यम् ) अमात्याः ( मन्त्रिणः ) च सर्वम् ( निखिलम् ) एव अनुदीर्यते ( भीतं भवति ) ते ( मन्त्रिसैन्याद्याः ) सर्वेऽपि मतीः ( बुद्धीः ) पृथक् ( भिन्नाः ) कुर्वन्ति ( विदधति ) ।

व्युत्पत्तिः—राज् धातोः ष्ट्रन् प्रत्यये राष्ट्रम् ।

भावार्थः—क्योंकि राजा को भयभीत देखकर उसकी सेना, सारा राज्य तथा मन्त्रिमण्डल ये सभी अपने अपने मन की करने लग जाते हैं ॥ २ ॥

शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥३॥

पदच्छेदः—शत्रून्, एके, प्रपद्यन्ते, प्रजहति, अपरे, पुनः, अन्ये, तु, प्रजिहीर्षन्ति, ये, पुरस्ताद्, विमानिताः ।

अन्वयः—एके, शत्रून्, प्रपद्यन्ते, अपरे, पुनः, प्रजहति, अन्ये, ये, पुरस्तात्, विमानिताः ( ते ) प्रजिहीर्षन्ति ।

व्याख्या—एके ( केचित् आत्मीयाः ) शत्रून् ( रिपून् ) प्रपद्यन्ते ( गच्छन्ति ) अपरे ( अन्ये ) पुनः प्रजहति ( राजानम् त्यजन्ति ) अन्ये ( अपरे ) ये स्वकीयाः पुरस्तात् ( अग्रतः ) विमानिताः ( अपमानिताः ) ते प्रजिहीर्षन्ति ( परिहर्तुमिच्छन्ति ) एवं सर्वेऽपि दूरीभवन्ति ।

व्युत्पत्तिः—प्रपद + श्यन् + लट् । प्र हा + लट् । प्र हृ + सन् + लट् ।

भावार्थः—कुछ व्यक्ति शत्रुओं से मिल जाते हैं, अन्य लोग छोड़ देते हैं, और भी जो किसी प्रकार से कभी राजा द्वारा अपमानित हुए हैं वे ऐसी विषमस्थिति में राज्य ही हड़प जाना चाहते हैं ॥३॥

य एवात्यन्तसुहृदस्त एवं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव ॥४॥

पदच्छेद:—ये, एव, अत्यन्तसुहृद:, ते, एनम्, पर्युपासते, अशक्तय:, स्वस्तिकामा:, वद्धवत्सा:, इला:, इव।

अन्वय:—ये, एव, अत्यन्तसुहृद:, अशक्तय:, स्वस्तिकामा:, वद्धवत्सा:, इला: इव, ते, एनम्, पर्युपासते।

व्याख्या—ये एव ( शिष्टा: कतिपये ) अत्यन्तसुहृद: ( अधिकस्नेहभाज: ) अशक्तय: ( सामर्थ्यविकला: ) स्वस्तिकामा: ( मङ्गलकाङ्क्षा: ) वद्धवत्सा: ( निबद्धपुत्रा: ) इला: ( गाव: ) इव ( यथा ) ते ( सर्वे ) एनम् ( राजानम् ) पर्युपासते ( निर्बलमपि भक्त्या सेवन्ते इत्यर्थ: )।

व्युत्पत्ति:—अत्यन्तं सुहृद: अत्यन्तसुहृद:। नास्ति शक्ति: येषां ते (बहु०)। स्वस्ति कामयन्ते इति ( तत्पु० )। वद्ध: वत्स: यस्या: सा ( बहु० )।

भावार्थ:—जो अत्यन्त मित्र हैं वे ही ऐसे समय ऐसे राजा के शुभ की इच्छा रखते हुए ज्यों के त्यों रह जाते हैं। उनके पास कोई शक्ति नहीं इसलिए विवश रहते हैं तथा उस गाय की तरह कि जिसका बछड़ा बँधा हुआ है छोड़कर भाग नहीं पाते ॥४॥

शोचन्तमनुशोचन्ति पतितानिव बान्धवान्।
अपि ते पूजिता: पूर्वमपि ते सुहृदो मता: ॥ ५ ॥

पदच्छेद:—शोचन्तम्, अनुशोचन्ति, पतितान्, इव, बान्धवान्, अपि, ते, पूजिता:, पूर्वम्, अपि, ते, सुहृद:, मता:।

अन्वय:—पतितान्, बान्धवान्, इव, शोचन्तम्, अनुशोचन्ति, पूर्वम्, पूजिता:, अपि, ते, सुहृद:, मता:।

व्याख्या—पतितान् ( विपत्तिमग्नान् ) बान्धवान् ( निजबन्धून् ) इव (यथा) शोचन्तम् ( शोकं कुर्वन्तम् ) अनुशोचन्ति ( पश्चात्तपन्ति ) पूर्वम् ( प्राक् ) पूजिता: (सम्मानिता:) अपि ये जना: ते इदानीम् ते (तव) सुहृद: (हितकामा:) सन्तीति शेष:।

व्युत्पत्ति:—सुष्ठु हृदयं येषां ते सुहृद: ( बहु० )।

भावार्थ:—दु:खीबान्धवों सरीखे दु:ख में पड़े हुए राजा के लिए शोक करते हैं, पहले जिनका तूने सम्मान किया था वे स्नेही की दृष्टि से अपना राज्य समझकर किसी प्रकार राजा का कल्याण करना अपना धर्म समझते हैं ॥५॥

ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुष:।
मादीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषु: ॥ ६ ॥

पदच्छेद:—ये, राष्ट्रम्, अभिमन्यन्ते, राज्ञ:, व्यसनम्, ईयुष:, मादीदर:, त्वम्, सुहृद:, मा, त्वाम्, दीर्णम्, प्रहासिषु:।

अन्वयः—व्यसनम्, ईयुषः, राज्ञः, ये, सुहृदः, राष्ट्रम्, अभिमन्यन्ते (तान्) त्वम्, मादीदरः, (ते) दीर्णम्, त्वाम्, मा प्रहासिषुः ।

व्याख्या—व्यसनम्, (दुःखम्) ईयुषः, (प्राप्तस्य) राज्ञः (नृपस्य) ये (केचित्) सुहृदः (मित्राणि) राष्ट्रम् (इदं स्वीयं राज्यम् इति) अभिमन्यन्ते (मनसा जानन्ति) तान् त्वम् (ईदृशः) मादीदरः (माविदारय) तेषाम् भयं नोत्पादयेत्यर्थः । ते च दीर्णम् (भीतम्) त्वाम् (राजानम्) मा प्रहासिषुः (न परित्यजेयुः) ।

व्युत्पत्तिः—अभिमन् + श्यन् + लट् + झ ।

भावार्थः—राजा को दुःख में देखकर वे यह सोचते हैं कि यह राज्य हमारा है राजा भी अपना है किसी प्रकार इसका उद्धार करना चाहिए ऐसे लोगों को तू भय न दिखा, वे भी जिससे तुझे दुःख में न छोड़ बैठें ॥६॥

प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥७॥

पदच्छेदः—प्रभावम, पौरुषम्, बुद्धिम्, जिज्ञासन्त्या, मया, तव, विदधत्या, समाश्वासम्, उक्तम्, तेजोविवृद्धये ।

अन्वयः—मया, तव, प्रभावम्, पौरुषम्, बुद्धिम्, जिज्ञासन्त्या, समाश्वासम्, विदधत्या, तेजोविवृद्धये, उक्तम् ।

व्याख्या—मया (तव मात्रा) तव (सञ्जयस्य) प्रभावम् (प्रतापम्) पौरुषम् (पुरुषकारम्) बुद्धिम् (ज्ञानम्) जिज्ञासन्त्या (ज्ञातुमिच्छया) समाश्वासम् (धैर्यम्) विदधत्या (विदधानया) तेजोविवृद्धये (तेजःसम्वर्द्धनाय) उक्तम् (एवम् त्वं शासितः) नान्यत् प्रयोजनम् ।

व्युत्पत्तिः—ज्ञातुमिच्छन्ती जिज्ञासन्ती तया । तेजसः विवृद्धिः तस्यै (ष.त.)।

भावार्थः—तुम्हारे प्रभाव, पुरुषार्थ, बुद्धि के जानने की इच्छा से तथा तुम्हारे तेज को बढ़ाने के लिए तुमसे यह धैर्य बँधाने की बात कही ॥ ७ ॥

यदेतत् संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥८॥

पदच्छेदः—यत्, एतत्, संविजानासि, यदि, सम्यक्, ब्रवीमि, अहम्, कृत्वा, असौम्यम्, इव, आत्मानम्, जयाय, उत्तिष्ठ, सञ्जय ।

अन्वयः—हे सञ्जय ! यत्, एतत्, संविजानासि, यदि, अहम्, सम्यक्, ब्रवीमि (तर्हि) आत्मानम्, असौम्यम्, इव, कृत्वा, जयाय, उत्तिष्ठ ।

व्याख्या—हे सञ्जय ! (हे पुत्र !) यत् एतत् (इदम्) संविजानासि (अवबुध्यसे) यदि (चेत्) अहम् (विदुला) सम्यक (उचितम्) ब्रवीमि

( वदामि ) तर्हि आत्मानम् ( स्वम् ) असौम्यम् ( कठिनम् ) इव ( यथा ) कृत्वा (विधाय) जयाय (विजयाय) उत्तिष्ठ (जागृहि ) विलम्बो न कर्त्तव्यः इति भावः।

भावार्थः—हे सञ्जय ! यदि तुम मेरी इन बातों को अच्छी तरह समझते हो कि मेरा कहना उचित है तो अपने दिल को कड़ा करके विजय के लिए उठ खड़े हो जा ॥ ८ ॥

> अस्ति नः कोशनिचयो महान् ह्यविदितस्तव ।
> तमहं वेद नाऽन्यस्तमुपसम्पादयामि ते ॥ ९ ॥

पदच्छेदः—अस्ति, नः, कोशनिचयः, महान्, हि, अविदितः, तव, तम्, अहम्, वेद, न, अन्यः, तम्, उपसम्पादयामि, ते ।

अन्वयः—हि, तव, अविदितः, नः, महान्, कोशनिचयः, अस्ति, तम्, अहम्, वेद, अन्यः, न, ते, तम्, उपसम्पादयामि ।

व्याख्या—हि ( यतः ) तव ( सञ्जयस्य ) अविदितः ( अज्ञातः ) नः ( अस्माकम् ) महान् ( विशालः ) कोशनिचयः ( कोशसञ्चयः ) अस्ति ( वर्तते ) तम् ( कोशनिचयम् ) अहम् ( विदुला एव ) वेद ( जानामि ) अन्यः ( इतरः ) न ( नैव जानाति ) ते ( तुभ्यम् ) उपसम्पादयामि ( प्रददामि ) इति । एवं सति धनार्थं चिन्ता न कार्या ।

व्युत्पत्तिः—न विदितिः अविदितः । कोशस्य निचयः कोशनिचयः । ते इति चतुर्थ्यन्तम् युष्मदः ।

भावार्थः—हे सञ्जय ! हमारे पास बहुत बड़ा धन का भण्डार सुरक्षित है। हमें छोड़ उसे दूसरा कोई नहीं जानता । यदि तुम युद्धार्थ तैयार हो तो वह खजाना मैं तुम्हें सौंप देती हूँ। जिससे तुम्हारा शासन प्रतिष्ठा से चले ॥ ९ ॥

> सन्ति नैकतमा भूयः सुहृदस्तव सञ्जय !।
> सुखदुःखसहा वीर ! सङ्ग्रामादनिवर्तिनः ॥१०॥

पदच्छेदः—सन्ति, नैकतमाः, भूयः, सुहृदः, तव, सञ्जय, सुखदुःखसहाः, वीर, सङ्ग्रामात्, अनिवर्त्तिनः ।

अन्वयः—हे सञ्जय !, भूयः, तव, नैकतमाः, सुहृदः, सन्ति, हे वीर !, सुखदुःखसहाः ( ते ), सङ्ग्रामात्, अनिवर्त्तिनः ( सन्ति ) ।

व्याख्या—हे सञ्जय ! ( हे पुत्र ! ) भूयः (पुनः) तव (सञ्जयस्य) नैकतमाः ( अनेके ) सुहृदः (मित्राणि) सन्ति ( वर्तन्ते ) हे वीर ! ( हे योध ! ) सुखदुःखसहाः ( सहिष्णवः ) ते संग्रामात् ( युद्धात् ) अनिवर्त्तिनः ( अप्रत्यावर्त्तिनः ) स्थिराः, इति यावत् ।

**व्युत्पत्तिः**—न एकतमाः नैकतमाः। सुखं च दुःखं चेति सुखदुःखे सहन्ते इति सुखदुःखसहाः। न निवर्त्तन्ते इति अनिवर्त्तिनः।

**भावार्थः**—हे पुत्र! इतनाही नहीं अभी तुम्हारे अनेकों मित्र वीर ऐसे हैं जो कि सुखदुःख सबको सहनेवाले तथा किसी प्रकार भी युद्ध के मैदान से भागनेवाले नहीं हैं॥१०॥

ताहशा हि सहाया वै पुरुषस्य बुभूषतः।
इष्टं जिहीर्षतः किञ्चित् सचिवाः शत्रुकर्शन॥११॥

**पदच्छेदः**—ताहशाः, हि, सहायाः, वै, पुरुषस्य, बुभूषतः, इष्टम्, जिहीर्षतः, किञ्चित्, सचिवाः, शत्रुकर्शन।

**अन्वयः**—हे शत्रुकर्शन!, किञ्चित्, इष्टम्, जिहीर्षतः, बुभूषतः, पुरुषस्य, हि, ताहशाः, वै, सहायाः, सचिवाः (भवन्ति)।

**व्याख्या**—हे शत्रुकर्शन! (हे शत्रुनाशन!) किञ्चित् (यत्किञ्चित्) इष्टम् (अभीष्टम्) जिहीर्षतः (साधयितुमिच्छतः) बुभूषतः (भविष्णोः) पुरुषस्य (जनस्य) हि (निश्चयेन) ताहशाः (इष्टकार्यसाधकाः) वै सहायाः (सहायकाः) सचिवाः (मन्त्रिणः) अवश्यम् भवन्ति, इति शेषः।

**व्युत्पत्तिः**—शत्रूणां कर्शनः तत्सम्बुद्धौ। हर्त्तुमिच्छति जिहीर्षति इति जिहीर्षन् तस्य। भवितुमिच्छति बुभूषति इति बुभूषन् तस्य। तद् + दृश् + कञ्।

**भावार्थः**—हे शत्रुओं के नाश करनेवाले वीर! किसी अभीष्ट की सिद्धि के लिए प्रयत्न करनेवाले भविष्णु व्यक्ति को उसके अनुकूल सहायक मन्त्री अवश्य मिल जाया करते हैं॥११॥

यस्यास्त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम्॥१२॥

**पदच्छेदः**—यस्याः, तु, ईदृशकम्, वाक्यम्, श्रुत्वा, अपि, स्वल्पचेतसः, तमः, तु, अपागमत्, तस्य, सुचित्रार्थपदाक्षरम्।

**अन्वयः**—यस्याः, तु, ईदृशकम्, सुचित्रार्थपदाक्षरम्, वाक्यम्, श्रुत्वा, स्वल्पचेतसः, अपि, तस्य, तमः, तु, अपागमत्।

**व्याख्या**—यस्याः (विदुलायाः) तु ईदृशकम् (एतादृशम्) सुचित्रार्थपदाक्षरम् (नानावर्णार्थसंगतम्) वाक्यम् (वचनम्) श्रुत्वा (आकर्ण्य) स्वल्पचेतसः (अल्पहृदयस्य) अपि तस्य (सञ्जयस्य) तमः (अज्ञानम्) युद्धाकरणरूपम् इति यावत्। तु अपागमत् (अपागच्छत्) ज्ञानम् लब्धवान् इति भावः।

व्युत्पत्तिः—स्वल्पं चेतो यस्य तस्य ( बहुव्री० ) । सुचित्राणि अर्थपदाक्षराणि यस्मिन् तत् ।

भावार्थः—यद्यपि सञ्जय का हृदय बहुत सङ्कुचित तथा कातर था फिर भी माता के विचित्र अर्थ, पदवाले वचन सुनकर, उसका अज्ञान दूर हो गया तथा युद्ध के लिए तैयार हो गया ॥१२॥

## पुत्र उवाच ।

उदके भूरियं धार्या मर्तव्यप्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥१३॥

पदच्छेदः—उदके, भूः, इयम्, धार्या, मर्तव्यप्रवणे, मया, यस्य, मे, भवती, नेत्री, भविष्यद्भूतिदर्शिनी ।

अन्वयः—यस्य, मे, भविष्यद्भूतिदर्शिनी, भवती, नेत्री, ( तेन ) मया, मर्तव्यप्रवणे, उदके, इयम्, भूः, धार्या ।

व्याख्या—यस्य मे ( सञ्जयस्य ) भविष्यद्भूतिदर्शिनी ( उत्तरकालप्रदर्शिनी ) भवती ( माता विदुला ) नेत्री ( शिक्षिका ) एतादृशेन मया ( सञ्जयेन ) प्रवणे ( युद्धे ) मर्तव्यम ( मरणीयम् ) अथवा उदके ( जले ) मग्ना इयम् ( एषा ) भूः ( पृथ्वी ) धार्या ( रक्षणीया ) उद्धार्येत्यर्थः ।

व्युत्पत्तिः—भविष्यन्ती या भूतिः ताम् दर्शयते या सा ।

भावार्थः—जिस मुझ सञ्जय की भविष्यत् काल बतलानेवाली आप जैसी माता हो वैसे मुझ व्यक्ति का कर्त्तव्य है कि शत्रुरूप जल में मग्न पृथ्वी का उद्धार करूँ या युद्ध में मर जाऊँ ॥१३॥

अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किञ्चित् किञ्चित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥१४॥

पदच्छेदः—अहम्, हि, वचनम्, त्वत्तः, शुश्रूषुः, अपरापरम्, किञ्चित्, किञ्चित्, प्रतिवदन्, तूष्णीम्, आसम्, मुहुः, मुहुः ।

अन्वयः—हि, त्वत्तः, अपरापरम्, वचनम्, शुश्रूषुः, अहम्, किञ्चित्, किञ्चित्, प्रतिवदन्, मुहुः, मुहुः, तूष्णीम्, आसम् ।

व्याख्या—हि ( यतः ) त्वत्तः ( मातृतः ) अपरापरम् ( उत्तरोत्तरम् ) वचनम् ( वाक्यम् ) शुश्रूषुः ( श्रोतुमिच्छुः ) अहम् ( सञ्जयः ) किञ्चित् ( यत्किञ्चित् ) प्रतिवदन् ( उत्तरम् ददत् ) मुहुः मुहुः ( भूयः भूयः ) तूष्णीम् ( मौनः ) आसम् ( अभवम् ) ।

व्युत्पत्तिः—अपरस्मात् अपरम् अपरापरम् । ... इति ...

**भावार्थः**—हे माता ! तुमसे बार २ कुछ न कुछ सुनने के लिए मैं बीच २ में कहीं कहीं जवाब देकर चुप हो जाता था ॥१४॥

अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमार्थं जयाय च ॥१५॥

**पदच्छेदः**—अतृप्यन्, अमृतस्य, इव, कृच्छ्रात्, लब्धस्य, बान्धवात्, उद्यच्छामि, एषः, शत्रूणाम्, नियमार्थम्, जयाय, च ।

**अन्वयः**—अमृतस्य, इव, कृच्छ्रात्, लब्धस्य, बान्धवात्, अतृप्यन्, एषः, शत्रूणाम्, नियमार्थम्, जयाय, च, उद्यच्छामि ।

**व्याख्या**—अमृतस्य ( पीयूषस्य ) इव ( यथा ) कृच्छ्रात् ( दुःखात् ) लब्धस्य ( प्राप्तस्य ) बान्धवात् ( बन्धुतः ) अतृप्यन् ( असन्तुष्यन् ) एषः ( अहम् ) शत्रूणाम् ( वैरिणाम् ) नियमार्थम् ( निग्रहार्थम् ) जयाय ( विजयाय ) च उद्यच्छामि ( उद्यमं करोमि ) ।

**व्युत्पत्तिः**—नियमाय इति नियमार्थम् । न तृप्यन् अतृप्यन् ।

**भावार्थः**—बड़ी कठिनता से मिले हुए अमृत के समान तुम्हारे वचनों से सन्तुष्ट न होता हुआ अब मैं बान्धवों की सहायता से शत्रुओं के निग्रह तथा उनपर विजय प्राप्त करने के लिए प्रयत्न करने जा रहा हूँ ॥१५॥

## कुन्त्युवाच ।

सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥१६॥

**पदच्छेदः**—सदश्वः, इव, सः, क्षिप्तः, प्रणुन्नः, वाक्यसायकैः, तत्, चकार, तथा, सर्वम्, यथावत्, अनुशासनम् ।

**अन्वयः**—सः, वाक्यसायकैः, प्रणुन्नः, सदश्वः, इव, क्षिप्तः, तथा, सर्वम्, तत्, अनुशासनम्, यथावत्, चकार ।

**व्याख्या**—सः ( सञ्जयः ) वाक्यसायकैः ( वाक्यबाणैः ) प्रणुन्नः ( विद्धः ) इव ( यथा ) क्षिप्तः तथा ( तेन प्रकारेण ) सर्वम् ( सम्पूर्णम् ) तत् ( मात्रोक्तम् ) अनुशासनम् ( आदेशम् ) यथावत् ( उचितरूपेण ) चकार ( अकार्षीत् ) ।

**व्युत्पत्तिः**—वाक्यानि सायका इव तैः । सन् अश्वः सदश्वः । अनुगतं शासनम् अनुशासनम् ।

**भावार्थः**—कुन्ती ने कहा कि हे कृष्ण ! इस प्रकार माता के वचनरूपी बाणों से बिंधे हुए प्रहृत घोड़े की तरह सञ्जय ने उसके उपदेशानुसार सब काम किया ॥१६॥

इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेत् मन्त्री सीदन्तं शत्रुपीडितम् ॥१७॥

**पदच्छेदः**— इदम्, उद्धर्षणम्, भीमम्, तेजोवर्द्धनम्, उत्तमम्, राजानम्, श्रावयेत्, मन्त्री, सीदन्तम्, शत्रुपीडितम् ।

**अन्वयः**—मन्त्री, सीदन्तम्, शत्रुपीडितम्, राजानम्, इदम्, उद्धर्षणम्, भीमम्, तेजोवर्द्धनम्, उत्तमम्, श्रावयेत् ।

**व्याख्या**—मन्त्री ( अमात्यः ) सीदन्तम् ( विषण्णम् ) शत्रुपीडितम् ( शत्रुकष्टितम् ) राजानम् ( नृपम् ) इदम् ( एतद् ) उद्धर्षणम् ( कथानकम् ) भीमम् ( भयङ्करम् ) तेजोवर्द्धनम् ( तेजोवर्द्धकम् ) उत्तमम् ( श्रेष्ठम् ) श्रावयेत् ( आकर्णयेत् ) ।

**व्युत्पत्तिः**—सीदति इति सीदन् तम् । शत्रुभिः पीडितः तम् । तेजसः वर्द्धनम् तेजोवर्द्धनम् ।

**भावार्थः**—मन्त्री को चाहिए कि वह शत्रु से पीडित दुःखी राजा को इस प्रतापी तथा तेज के बढ़ानेवाले उत्तम उपाख्यान को सुनावे ॥१७॥

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूँश्च मर्दति ॥१८॥

**पदच्छेदः**—जयः, नाम, इतिहासः, अयम्, श्रोतव्यः, विजिगीषुणा, महीम्, विजयते, क्षिप्रम्, श्रुत्वा, शत्रून्, च, मर्दति ।

**अन्वयः**—विजिगीषुणा, जयः, नाम, अयम्, इतिहासः, श्रोतव्यः, श्रुत्वा, क्षिप्रम्, महीम्, विजयते, शत्रून्, च, मर्दति ।

**व्याख्या**—विजिगीषुणा ( विजयकामेन ) जयः नाम ( जयनामकः ) अयम् ( एषः ) इतिहासः ( उपाख्यानम् ) श्रोतव्यः ( आकर्णनीयम् ) श्रुत्वा ( निशम्य ) क्षिप्रम् ( शीघ्रम् ) महीम् ( पृथ्वीम् ) विजयते ( अधिकुरुते ) शत्रून् ( रिपून् ) च ( पुनः ) मर्दति ( नाशयति ) ।

**व्युत्पत्तिः**—विजेतुमिच्छति विजिगीषति इति विजिगीषुः तेन । विजि + लट् ( विपराभ्यां जेः ) इत्यात्मेनपदम् ।

**भावार्थः**—विजय पाने की इच्छा करनेवाले राजा को चाहिए कि वह इस जय नाम के इतिहास को सुने । क्योंकि इसे सुनकर वह शीघ्र ही शत्रुओं का नाश करके पृथ्वी को जीत लेता है ॥१८॥

इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥१९॥

पदच्छेदः—इदम्, पुंसवनम्, च, एव, वीराजननम्, एव, च, अभीक्ष्णम्, गर्भिणी, श्रुत्वा ध्रुवम्, वीरम्, प्रजायते ।

अन्वयः—गर्भिणी, इदम्, पुंसवनम्, च, वीराजननम्, एव, च, अभीक्ष्णम्, श्रुत्वा, ध्रुवम्, वीरम्, प्रजायते ।

व्याख्या—गर्भिणी ( गर्भवती स्त्री ) इदम् ( एतत् ) पुंसवनम् ( पुत्रप्रसवकरम् ) च ( पुनः ) वीराजननम् ( वीरोत्पादकम् ) एव च अभीक्ष्णम् ( निरन्तरम् ) श्रुत्वा ( निशम्य ) ध्रुवम् ( निश्चयेन ) वीरम् ( शूरम् ) प्रजायते ( जनयति )।

व्युत्पत्तिः—गर्भः अस्ति अस्याः सा गर्भिणी । वीराणाम् जननं येन तद् वीराजननम् । प्रजन + लट् + श्यन् ।

भावार्थः—यह माहात्म्य पुत्र तथा शूरवीर बालकों का जन्म देनेवाला है, गर्भवती स्त्री यदि इस इतिहास को सुन ले तो अवश्य ही वह वीर पुत्र को पैदा करती है ॥ १९ ॥

विद्याशूरं तपःशूरं दानशूरं तपस्विनम् ।
ब्राह्मया श्रिया दीप्यमानं साधुवादे च संमतम् ॥२०॥

पदच्छेदः—विद्याशूरम्, तपःशूरम्, दानशूरम्, तपस्विनम्, ब्राह्मया, श्रिया, दीप्यमानम्, साधुवादे, च, सम्मतम् ।

अन्वयः—पदच्छेदवत् ।

व्याख्या—विद्याशूरम् ( स्वाध्यायवीरम् ) तपःशूरम् ( तपस्याप्रवणम् ) दानशूरम् ( महादानिनम् ) तपस्विनम् ( तपोनिष्ठम् ) ब्राह्मया ( ब्रह्मसम्बन्धिन्या ) श्रिया ( लक्ष्म्या ) दीप्यमानम् ( दिव्यदीप्तियुतम् ) साधुवादे ( सत्कथायाम् ) च सम्मतम् ( सम्मानितम् ) सूते इति तृतीयेन सम्बन्धः ।

व्युत्पत्तिः—विद्यायां शूरः तम् । तपसि शूरः तम् । दाने शूरः तम् । साधूनां वादः तस्मिन् ।

भावार्थः—विद्यावीर, तपस्यावीर, दानशूर, तपस्वी, ब्रह्मतेज से चमकते हुए, सज्जनों की चर्चा में आनेवाले ( पुत्र को पैदा करती है ) ॥ २० ॥

अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥२१॥

पदच्छेदः—अर्चिष्मन्तम्, बलोपेतम्, महाभागम्, महारथम्, धृतिमन्तम्, अनाधृष्यम्, जेतारम्, अपराजितम् ।

अन्वयः—पदच्छेदवत् ।

व्याख्या—अर्चिष्मन्तम् ( दीप्तिमन्तम् ) बलोपेतम् ( बलिनम् ) महाभागम्

( महाशयम् ) महारथम् ( महारथयुक्तम् ) धृतिमन्तम् ( धैर्यशीलम् ) अनाधृष्यम् ( अनाक्रमणीयम् ) जेतारम् ( विजयिनम् ) अपराजितम् ( अन्यैरजितम् ) पुत्रं क्षत्रिया सूते इत्यग्रेतनेन सम्बन्धः ।

व्युत्पत्तिः—अर्चिः अस्त्यस्मिन्नित्यर्चिष्मान् तम् । बलेन उपेतः तम् । महान् भागः यस्य तम् । महान् रथो यस्य तम् । धृतिः अस्त्यस्य इति धृतिमान् तम् । न आधृष्यः तम् । न पराजितः अपराजितः तम् । अथवा अपरः अजितः तम् ।

भावार्थः—तेजस्वी, बली, महाभाग, महारथी, धैर्यवान्, किसी से न दबनेवाले, विजयी, दूसरे से न जीते जानेवाले ( पुत्र को उत्पन्न करती है ) ॥२१॥

नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥२२॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासनसमाप्तौ षट्त्रिंशदधिकशततमोऽध्यायः ॥१३६॥

पदच्छेदः—नियन्तारम्, असाधूनाम्, गोप्तारम्, धर्मचारिणाम्, ईदृशम्, क्षत्रिया, सूते, वीरम्, सत्यपराक्रमम् ।

अन्वयः—क्षत्रिया, असाधूनाम्, नियन्तारम्, धर्मचारिणाम्, गोप्तारम्, वीरम्, सत्यपराक्रमम्, ईदृशम् ( पुत्रम् ) सूते ।

व्याख्या—क्षत्रिया ( क्षत्रियाणी ) असाधूनाम् ( असज्जनानाम् ) नियन्तारम् ( नियामकम् ) धर्मचारिणाम् ( धर्मपथानुयायिनाम् ) गोप्तारम् ( रक्षकम् ) वीरम् ( शूरम् ) सत्यपराक्रमम् ( सत्यविक्रमम् ) ईदृशम् ( एतादृशम् ) पुत्रम् सूते ( उत्पादयति ) ।

व्युत्पत्तिः- न साधवः असाधवः तेषाम् । धर्मं चरन्ति इति धर्मचारिणः तेषाम् । सत्यः पराक्रमः यस्य तम् ।

भावार्थः—क्षत्रिया साधुओं की रक्षा करने के लिए दुष्टों के दमन करनेवाले, धार्मिकों की रक्षा करनेवाले, वीर, पराक्रमी, प्रसिद्ध कीर्त्तिवाले पुत्र को उत्पन्न करती है ॥२२॥

इति महाभारतीये विदुलोपाख्याने आचार्यश्रीराजनारायणशास्त्रिशुक्लरचितायां [illegible]भाषायां चतुर्थोऽध्यायः ॥४॥ समाप्तं विदुलोपाख्यानम् ।